THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

No's 481, 482, 483, 484, 485

THE

# PRAKRITA VYĀKARANA VRITTĪ

WITH TEXT

OF

# SRĪ TRIVIKRAMA DEVA

*Edited with Introduction, Indices, Appendices etc, by*

SĀHITYĀCHĀRYA

**Pt Sri Jagannatha Sastri Hoshing**

PUBLISHED BY

JAYA KRISHNA DAS HARI DAS GUPTA

*The Chowkhambā Sanskrit Series Office,*

**Vidya Vilas Press Banaras**

# भूमिका

नाविदित खलु विपश्चिदपश्चिमाना संस्कृतसाहित्यरसिकाना सहृदय-धुरीणाना यत्-प्राकृत नाम किमपि वाङ्मय लोके बहुलप्रचारमासीत् पुरा भारते वर्षे। वाङ्मयमात्र हि लक्ष्यलक्षणभेदेन द्वैविध्य भजति। तत्र हि प्रायो लक्ष्यरूपतामावहन्ति काव्यनाटकप्रबन्धाद्या ग्रन्था। व्याकरणाद्यनुशासनानि पुनर्लक्षणग्रन्थरूपेण प्रसिद्धिमुपयान्ति सर्वत्र। 'मुख व्याकरण स्मृत'मिति स्फुट प्रतिपादयता भगवता श्रीमता पाणिनिमुनिना शिक्षाया वेदपुस षडङ्गेषु व्याकरणस्य मुखत्व निरूप्य सर्वस्यैव वाक्प्रपञ्चनिचयस्य मूल व्याकरण नाम समुद्घोषितम्। को नाम सचेता नाभ्युपेयादिम विषयम्। यतो हि व्याकरणज्ञानमन्तरा शब्दसाधुत्वपरिचायक नान्यत् किमपि लोके लोकलोचनातिथिता प्रयाति। अत एव प्रत्येकस्या भाषाया विद्वत्सम्मताया व्याकरणमुपलभ्यत एव। पूर्वैर्भारतीयै सूरिभि संस्कृतप्राकृतदेशीभेदेन भाषायास्त्रैविध्यमुद्घोषितम्। संस्कृतवाङ्मय हि वैदिक लौकिक चेति द्विविधता भजति। वैदिकलौकिकोभयविधभाषानुबद्धसिद्धान्तप्रतिपादकत्वात् पाणिन्यनुशासनस्य सुशक वेदाङ्गत्वस्थापनम्। आस्तामिद मप्रस्तुतप्रवाहपतनम्। यथा हि संस्कृतवाङ्मयस्य पाणिन्यादिव्याकरणग्रन्था उपकर्तारस्तथा तत्तद्भाषासौन्दर्यपरिरक्षणाय विशिष्टैर्विद्वद्भिर्निर्मिता व्याकरणप्रबन्धा सन्त्येव भाषाणामन्यासामपि। वाल्मीकिवररुचिभामहादिप्रणीता शब्दसाधुत्वसम्पादका समुपलभ्यन्ते बहव प्राकृतभाषाया अपि व्याकरणग्रन्था। तदन्त पातितया प्रसिद्धमेक प्राकृतभाषाव्याकरणपुस्तकमभिलक्ष्यीकृत्य किञ्चित्समीहामहे वक्तुम्।

प्राकृतव्याकरणनिर्मातृषु को वा श्रीत्रिविक्रमदेव विस्मर्तुं शक्नुयात्। केचित् सूत्रकारा, केचिच्च व्याख्याकारा, केचन च सूत्रव्याख्याकारा सर्वत्र समुपलभ्यन्ते दृग्गोचरतामुपगता। अस्माक श्रीत्रिविक्रमदेवस्तु स्वय सूत्राणि प्रणीय व्याख्या च तेषा सोदाहरणा निरमादित्यस्ति तस्मिन् लक्ष्यलक्षणोभयवेत्तृत्वमिति स्पष्टम्। स च ग्रन्थ 'प्राकृत व्याकरणवृत्ति'रिति 'प्राकृत

सूत्रवृत्ति'रिति वा समुल्लसन्नाम्ना सत्र साम्प्रत समुन्न प्रकाश्यते। यदा धारेणैतत्पुस्तकस्य प्रकाशनमभूत्तत्पुस्तकद्वय स्वर्गताना "लद्दू" वश्याना कृष्णात्मनाना तुकारामशमणामेव, तेषु दिवङ्गतेषु तन्नीगवस्तुविक्रयप्रसङ्गे तत्रोपस्थाय पुस्तकावाप्तिलाभलोभेन श्रीमद्भि प्राचीनसस्कृतपुस्तकप्रकाशकै चोखम्बासस्कृतमालाविद्याविलासयन्त्रालयाध्यक्षै श्रीजयकृष्णदासमहोदयैर्द्वित्राणि पञ्चषाणि वा पुस्तकानि क्रीतानि। अनन्तर कदाचिदेकस्यैव ग्रन्थस्य पुस्तकद्वय विचार्य प्रचिकाशयिषया ते श्रेष्ठिमहोदया कार्यमिद मह्य समर्प्य मा प्रोदसाहयन्। आधारभूत पुस्तकद्वयमपि नवीनमेव प्रायश्च सुस्पष्टाक्षर शुद्ध च। १०½"×८½" रूपेण लम्बाकार २५९ पृष्ठात्मक (क) सञ्ज्ञया स्थापितम्, अन्यच्च तञ्जोरपुस्तकालयस्थपुस्तकप्रतिलिपीभूतम् ८"×६" एतदाकारात्मकं २०६ पृष्ठात्मक (ख) सञ्ज्ञितम्। मुद्रिते च प्रथमाध्यायस्य कियतिचन भागे 'सरस्वतीभवनपुस्तकालय'स्थ ग्रन्थप्रदर्शिन्या मुद्रित समुपलभ्य (ग) सञ्ज्ञयैकं पुस्तकमत्र सङ्केतितम्। यत्र पुस्तकमिद बहो कालात् पूर्वं मुद्रितमपि नाद्य यावत् प्राकाश्यमभजदुपोद्घातमन्तरा। उपोद्घातादिलेखने 'प्राकृतभाषा, ग्रन्थैतिहासा'दि सर्वं सावकाश सगृह्य विलिख्येतेत्युत्तरमदाथि प्रान्यप्रतीच्योभयविधविद्याभदीक्षणैरस्मदभिन्नसुहृद्भि काशीस्थहिन्दूविश्वविद्यालयाध्यापके श्रीबटुकनाथशर्मभि 'एम्० ए०', 'साहित्याचार्य' पदवीभृद्भिरस्मत्प्रार्थिते। पर दैवदुर्गत्या कृते तद्विषयकसग्रहा अपि तेऽकाल एवास्मान् परित्यज्य देवभूयस्त्व गता। तदनन्तर च तत्कृपापात्रभूता साहित्याचार्य, एम्० ए० पदभाजो वाराणसेय हिन्दूविश्वविद्यालयाध्यापका श्रीबलदेवशर्माण उपाध्याया प्रार्थिता। अङ्गीकृतप्रार्थना अपि ते कार्यान्तरासक्ततया व्याध्यान्यनैकविधबाधाकुलिता नाशकन् तत्कार्यं पूरयितुम्। दशवत्सरेभ्य पूर्वं मुद्रितस्य ग्रन्थस्य शीघ्र प्रकाशनाय पुनर्मां प्रेरयन्तो विद्याविलासमुद्रणालयाधिपतयोऽभ्यर्थयन्। अत कर्मण्यस्मिन् ममैव प्रवर्तनम्। प्रकाशनावसरेऽस्मत्प्रियसुहृद्भि साहित्याचार्यै, साहित्यवारिधिभि, साम्प्रत वाराणसेयराजकीयमहाविद्यालय प्रधानाध्यक्षचरैर्महामहोपाध्यायपदभृद्भि श्रीनारायणशास्त्रिखिस्तेमहोदयै प्रदत्तं स्वीयमेकं टिप्पणीरूपं सङ्क्षिप्तमपूर्णं पुस्तकमपि समये समये साहाय्य

मातनोदिति सुहृद्वर्या कथङ्कार विस्मर्तु शक्यन्ते। अस्तु तावत्, पुस्तक मिदमध्यायत्रयात्मकम्, तत्र प्रत्यध्याय चत्वार पादा । सूत्राणि पुन प्रथमेऽध्याये ३८६ सन्ति। ५४, १०९, १०५, १२१—इति क्रमेण पादचतु ष्टयसख्या। द्वितीयेऽध्याये ७७, ९२, ४२, १५७—इति पादक्रमेण ३६८ सूत्राणि। तृतीये पुनरध्याये १३३, ६७, ५८, ७१—इति चतुर्णां पादाना क्रमेण ३२६ सूत्राणामुपलब्धिर्दृश्यते। सङ्कलनया च १०८६ सूत्रसख्या पूर्णा भवति।

श्रीत्रिविक्रमदेवोपज्ञेऽमुष्मिन् व्याकरणग्रन्थे पूर्वमेकादश पद्यानि, तत सूत्रव्याख्योदाहरणादि सन्दब्ध वर्तते। प्रारम्भिकपद्यपर्यालोचनया किमपि किञ्चिदैतिहासिक तत्त्वमुद्बुद्ध भवति। प्रथम पद्य श्रीवीरप्रणामात्मक मङ्गलरूपेण भासमानमपि शिष्टाचारपरम्परामक्षुण्णा द्योतयति। अथ हि श्रीत्रिविक्रमदेव स्वीय गुरु श्रीमदर्हनन्दित्रैविद्यमुनि, पितामह श्रीबाणकुल वशीयमादित्यव(श)र्माण, पितर श्रीमल्लिनाथ, मातर लक्ष्मी, भ्रातर च वृत्तविद्याधामान श्रीभाम द्वितीयतृतीयपद्याभ्या निर्दिशन् स्व च सुकवि परिचाययति । अथायमार्यश्रीवीरसेन-जिनसेनयोर्वचनकदम्बकमनुसृत्यै तदरचयदिति सम्प्रदायशुद्धि जैनधर्मप्रेमाण च प्रादर्शयत्। प्राकृतवाङ् मयस्य सुखोच्चारणत्व प्राकृतस्य च तत्समतद्भवदेश्यभेदेन त्रैविध्यमुपपाद्य तत्समस्य सस्कृतसमस्य सस्कृतलक्षणा व्युत्पत्त्यादिक ज्ञेयमिति, देश्यस्य पुनरार्षत्वमङ्गीकृत्य तस्य स्वतन्त्रतया रूढतया च साम्प्रदायिकत्वेन तद्द्वय मुपेक्ष्य तद्भवाना शब्दसाधुत्वप्रकार प्रदर्श्यत इति पञ्चमषष्ठसप्तमाष्टमपद्यै स्पष्ट प्रतीयते। नवमेन च पद्येन स्वनिर्मितसूत्राणा स्वयमेव वृत्ति विरचयाम्या गमक्रमेणेति तस्य स्फुटोक्ति। स्ववृत्तेर्दर्पणसाम्य पद्येन दशमेन सूचितवान्। प्राकृतरूपाणा विवरण यथा श्रीहेमचन्द्रार्यादारभ्य प्राचीनै कृत तथैवात्रा- पीति प्रतिपादयत्येकादश पद्यम्। ग्रन्थान्तेऽपि पद्यत्रयमुपलभ्यते। तत्र प्रथ मेन त्रैविक्रमव्याकरणमाद्रियतेति, द्वितीयेन स्वनिर्मितकाव्यप्रशसन, स्व पराशयसवादिकथासु त्रिविक्रम एवैक, स्वाभिप्रायप्रकाशकास्तु सर्वे एव भवन्तीति तृतीयेन प्रत्यपादयत्।

भारतवर्षीयपण्ढरपुराऽभिजनो लदूदूवश्य कृष्णात्मजस्तुकारामशर्मा

श्रीत्रिविक्रमदेवनिर्मितव्याकरणग्रन्थमिममाश्रित्य शार्मण्यभाषाया निबन्धमेकं विलिख्य प्रकाश्य च "डाक्टर" पदवीमवाप्तवान्। "Prolegomena Zu Trivikrama's Prakrit-Grammatik" Von Dr T Laddu, Aus Pandharpur, Indien, Ed in 1912 इति तत्पुस्तकपरिचय। शार्मण्यदेशीयाना भाषामजानन्तो वय न तस्मात्किमप्येतस्मिन् विषये साहाय्यमलभामहि। पर मङ्गलपद्ये 'श्रीवीर', द्वितीये "वर्मण पौत्र" इत्यस्य स्थाने "शर्मण पौत्र" इति, प्रस्तुतपुस्तके एकादशे पद्ये "प्राच्यैराहेमचन्द्रास्यात्" इति पुस्तकद्वयादर्शभूताधारेण मुद्रितस्य स्थाने "प्राच्यैरा हेमचन्द्रार्यात्" इति च पाठान्तरमुपलभ्य कथं न तत्पुस्तकलेखकस्य विभ्रम उपकारभारमिति "डा० टी० के० लड्डू, बी० ए०, पी० एच्० डी०" महोदया अपि स्मर्यन्ते।

एतत्सम्बन्धेन कदाचिदवकाशसमये वाराणसेये राजकीये 'सरस्वती भवन'पुस्तकालये श्रीमदाफ्रेक्टमहोदयीये महति सूचीपत्राणा सूचीपत्रेऽधस्तान्निर्दिष्टानि प्राकृतव्याकरणग्रन्थरत्नानि नेत्रगोचरतामुपगतानीति तथा पुरस्तात् समुपस्थाप्यन्ते।

१ प्राकृतसूत्राणि—वाल्मीकि
२ „ कल्पतरु —रामतर्कवागीश
३ „ कामधेनु —लङ्केश्वर
४ „ कौमुदी—( ? )
५ „ चन्द्रिका ( मनोरमैव )—भामह
६ „ „—कृष्णपण्डित =शेषकृष्ण
७ „ दीपिका—चण्डीदेवशर्मा
८ „ नामलिङ्गानुशासनम्—( ? )
९ „ पाद —नारायण
१० „ प्रकाश —वररुचि
११ „ प्रक्रियावृत्ति —उदयसौभाग्यमणि
( हेमचन्द्रकृतप्राकृताध्याये )

१२ प्राकृतप्रदीपिका—( ? )
१३ „ प्रबोध —नरचन्द्र ( हेमचन्द्रकृतप्राकृताध्याये )
१४ „ भाषान्तरविधानम—चन्द्र ( ? )
१५ „ मणिदीप —अप्पयदीक्षित
१६ „ मञ्जरी—कात्यायन
१७ „ रहस्यम् ( षड्भाषावार्तिक वा )—( ? )
१८ „ रूपावतार – सिंहराट् ( समुद्रबन्धवडवसुत )
१९ „ लक्षणम्—चण्ड
२० „ व्याकरणम्—समन्तभद्र
२१ „ व्याकरणवृत्ति —
„ सूत्रवृत्तिर्वा ससूत्रा— } त्रिविक्रमदेव
२२ „ सञ्जीवनी—वसन्तराज
२३ „ सर्वस्वम्—हेमचन्द्र
२४ „ सर्वस्वम्—मार्कण्डेयकवीन्द्र
२५ „ सुबोधिनी—सदानन्द
२६ „ संस्कार —( ? )
२७ प्राकृतानन्द —रघुनाथशर्मा
२८ प्राकृताष्टाध्यायी—( ? )
२९ षड्भाषाचन्द्रिका—भामकवि
३० „ „ —लक्ष्मीधर
३१ षड्भाषामञ्जरी— „

समुपलभ्यमानेष्वेतेष्वेकत्रिंशत्पुस्तकनामसु तत्तत्पुस्तकमुद्रणोपक्रमे त दितिहासप्रकाश विदध्युरेव संशोधका विद्वांस । एतदतिरिक्तमप्येकं नाम तत्रैव प्रकरणे 'प्राकृतपिङ्गल'मिति दृष्ट, पर प्रायस्तच्छन्दोविषयक स्यादिति मत्वास्माभिरुपेक्षितम् । तदिद प्राकृतं मागधी शौरसेनी पैशाची-महाराष्ट्री-त्यादिभेदेन षड्विधमिति षड्भाषाचन्द्रिकादिपुस्तकदर्शनादनुमीयते । नैत स्मिन् विषये प्रपञ्च्यतेऽधिकम् ।

किञ्च श्रीहेमचन्द्राचार्योऽपि क्वचित्स्थले समुल्लिखितवान् श्रीश्रुतसागर-प्रणीतमौदार्यचिन्तारत्नाभिध पुस्तकमेक प्राकृतभाषीयम्। "प्राकृतप्रकाश प्राकृतमञ्जरी"स्थानि सूत्राणि समानानि। "प्राकृतव्याकरणवृत्ति-षड्भाषा चन्द्रिकयो" सूत्राणि समानतामावहन्त्यपि पूर्वस्माद्भिन्नानि। सिद्धहेम-शब्दानुशासनाख्यहेमचन्द्रव्याकरणस्य तु भिन्नान्येव सन्ति सूत्राणि।

मुद्रिते चाऽस्मिन् पुस्तके श्रीत्रिविक्रमदेवोपज्ञे ससूत्रवृत्तिके प्राकृत व्याकरणरूपे-१ सूत्राष्टाध्यायी, २ सूत्रानुक्रमणिका, ३ प्राकृतसूत्रवृत्तिगत पद्यानुक्रमणी, ४ प्राकृतशब्दानुक्रमणिका, ५ शुद्धिपत्र चेति पञ्च विषया संगृह्य निवेशिता सन्ति। तदिद पुस्तक विदुषा प्रेमपात्र स्यादेवेति बाढ विश्वसिम।

पराधीने भारते मुद्रितचरमप्येतत्पुस्तकं सम्प्रति भूमिकासम्भूषित सत् स्वाधीने भारतवर्षे प्राकाश्यमुपगच्छतीति सर्व एव भारतीया प्रसन्ना स्युरेव। प्राकृतभाषादिसम्बन्धेन षडभाषाचन्द्रिकासम्पादका इतरेऽपि केचन समालोचितवन्त। केचनाऽन्येपि तदर्थं प्रयतमाना सन्ति विद्वांस इति मौनमेव समाश्रीयतेऽस्माभिरत्र विषये।

यदनुग्रहेण वाङ्मयस्य सेवनेऽभिरुचिरतत्प्रवृत्त्यभिमुखी मतिश्च सम जायत, त परमेशान, "गुरुर्ब्रह्मा"-इत्यादिवचनकदम्बसमुद्घोषित म० म० पं० श्रीलक्ष्मणशास्त्रितैलङ्ग, साहित्याचार्यश्रीभालचन्द्रशास्त्रिमानवल्लीस्वरूप गुरुद्वयात्मान परम देव च स्मार स्मार विरमाम्यमुष्मात् प्रस्तावनालेखन व्यापारादिति शिवम्।

वाराणसी नगरी,
कार्तिकशुक्लैकादशी,
सं० २००७

विदुषां वशवदः—
श्री जगन्नाथशास्त्री होशिङ्गः
( साहित्याचार्य )

# प्राकृतसूत्राध्यायत्रयी ।

## प्रथमाध्याये—

### प्रथमः पाद ।



### द्वितीय पाद ।

## तृतीय पाद ।

## द्वितीयाध्याये—

### प्रथम पाद ।

## द्वितीय पाद ।

## तृतीयाऽध्याये–

### प्रथम पादः ।

समाप्ता चेयं प्राकृतसूत्राध्यायत्रयी ।

॥ श्री ॥

## श्रीत्रिविक्रमदेवनिर्मिता

## ससूत्रा

# प्राकृतव्याकरणवृत्तिः ।

श्रीवीरप्राच्याचलसमुदितमखिलप्रकाशक वन्दे ।
दिव्यध्वनिपटुदीधितिमहमक्षरपद्धतिप्राप्त्यै ॥ १ ॥
श्रुतभर्तुरर्हनन्दित्रैविद्यमुने पदाम्बुजभ्रमर ।
श्रीवाणसुकुलकमलद्युमणेरादित्यवर्मण पौत्र ॥ २ ॥
श्रीमल्लिनाथपुत्रो लक्ष्मीगर्भामृताम्बुधिसुधाशु ।
भामस्य वृत्तविद्याधाम्नो भ्राता त्रिविक्रम सुकवि ॥ ३ ॥
श्रीवीरसेनजिनसेनार्यादिवच पयोधिपूरात् कतिचित् ।
प्राकृतपदरत्नानि प्रकृतिकृती सुकृतिभूषणाय चिनोति ॥ ४ ॥
अनल्पार्थं सुखोच्चार शब्दसाहित्यजीवितम् ।
स च प्राकृतमेवेति मत सूत्रानुवर्तिनाम् ॥ ५ ॥
प्राकृत तत्सम देश्य तद्भव चेत्यदस्त्रिधा ।
तत्सम सस्कृतसम नेय सस्कृतलक्ष्मणा ॥ ६ ॥
देश्यमार्षं च रूढत्वात् स्वतन्त्रत्वाच्च भूयसा ।
लक्ष्म नापेक्ष्यते तस्य सम्प्रदायो हि बोधक ॥ ७ ॥
प्रकृते सस्कृतात्साध्यमानात् सिद्धाच्च यद्भवेत् ।
प्राकृतस्यास्य लक्ष्यानुरोधि लक्ष्म प्रचक्ष्महे ॥ ८ ॥
प्राकृतपदार्थसार्थप्राप्त्यै निजसूत्रमार्गमनुजिगमिषताम् ।
वृत्तिर्यथार्थसिद्धयै त्रिविक्रमेणाऽऽगमक्रमात् क्रियते ॥ ९ ॥
तद्भवतत्समदेश्यप्राकृतरूपाणि पश्यता विदुषाम् ।
दर्पणतयैवमवनौ वृत्तिस्त्रैविक्रमी जयति ॥ १० ॥

प्राकृतरूपाणि यथा प्राच्यैराहेमचन्द्रास्यात् ।
विवृतानि तथा तानि प्रतिबिम्बन्तीह सर्वाणि ॥ ११ ॥

## सिद्धिर्लोकाच्च ॥ १ ॥

सिद्धिरिह प्राकृतसम्बन्धिनी परिगृह्यते । सा च लोकाद्भवति । यस्मात्–ऋलृवर्णाभ्यामैकारौकाराभ्यामसम्पृक्तङञकाराभ्यां शषाभ्यां द्विवचनादिना रहित शब्दोच्चारो लोकव्यवहारादेवोपलभ्यते, देश्याश्च शब्दा , तस्मात् सिद्धि लोकादिति वेदितव्यम । चकाराद्वक्ष्यमाणलक्षणादनैकान्ताच्च ॥

## अनुक्तमन्यशब्दानुशासनवत् ॥ २ ॥

यदिह स्वरादिसञ्ज्ञात्वेन सन्धिप्रभृतिकार्यत्वेनाऽनुक्त तत्सर्वमन्यशब्दानुशासनवत् कौमारजैनेन्द्रपाणिनीयप्रभृतिषु व्याकरणेषु यथोक्त तत्तथैवेति वेदितव्यम् ॥

## सञ्ज्ञा प्रत्याहारमयी वा ॥ ३ ॥

इह प्राकृतव्याकरणे सञ्ज्ञा प्रत्याहारस्वरूपा व्यह्रियते । वाग्रहणाद्वक्ष्यमाणाच्च । पुन प्रत्याहारग्रहण भूयो व्यवहारदर्शनार्थम् । यथा स्वरोऽच्, ए ओ एङ्, ऐ औ ऐच्, व्यञ्जन हल, स्वादि सुप्, त्यादिस्तिङ्–इत्यादि ॥

## सुप्स्वादिरन्त्यहला ॥ ४ ॥

सुप्सु स्वादिषु विभक्तिषु आदिर्वर्णो वचन वाऽन्त्यहला अन्त्यव्यञ्जनेन सह सञ्ज्ञा भवति । यथा—सु औ जस्–सुस् ,अम् औट् शस्–अस्, टा भ्या भिस्–टास्, ङे भ्या भ्यस्–ङेस्, ङसि भ्या भ्यस्–ङसिस्, ङस् ओस् आम् ,–ङाम् ङि ओस् सुप्–ङिप् । पञ्चम्या ङस् इति, ङसिस् इति ङस षष्ठ्येकवचनस्याऽसन्देहार्थम् ॥

## ह्रो ह्रस्वः ॥ ५ ॥

एकमात्रो यो वर्णो ह्रस्व इति प्रसिद्धस्तस्य ह्र इति सञ्ज्ञा ॥

## दिर्दीर्घ ॥ ६ ॥

यो द्विमात्रो वर्णो दीर्घ इति रूढस्तस्य दि इति सञ्ज्ञा ॥

## शषसाः शु ॥ ७ ॥

शषस–इत्येते वर्णा शुसञ्ज्ञका भवन्ति ॥

स समास ॥ ८ ॥

समास ससञ्ज्ञको भवति॥

आदि खु ॥ ९ ॥

आदिवर्ण खुसञ्ज्ञको भवति ॥

गो गणपर ॥ १० ॥

आदिरिति वर्तते । गणप्रधानो य आदिशब्द स गसंज्ञको भवति । यथा गुणादिरित्यादौ गुणग इत्यादि ॥

द्वितीय फु ॥ ११ ॥

शब्दस्य द्वितीयो वर्ण फुसञ्ज्ञको भवति ॥

सयुक्त स्तुः ॥ १२ ॥

व्यञ्जनेन युक्तं सयुक्त, तस्य स्तु इति सञ्ज्ञा ॥

तु विकल्पे ॥ १३ ॥

विकल्पे विभाषाया तुशब्द प्रयुज्यते वाशब्दवत् ॥

प्रायो लिति न विकल्पः ॥ १४ ॥

य कार्यार्थ सूत्रेऽनुबध्यते न तु दृश्यते सोऽनुबन्ध इति व्याकरणा तरे लक्षणम् । लकार इत् यस्यासौ लित् । लिति कार्ये विकल्प प्रायो न भवति ॥

शिति दीर्घ. ॥ १५ ॥

शानुबन्धे कार्ये सति पूर्वस्य स्वरस्य दीर्घा भवति । यथा—'शि श्लुङ् न-पुनरिति', अत्र नपुन शब्दे अन्त्यव्यञ्जनस्य शानुबन्धेकारलोपयो पूर्व स्याऽचो दीर्घ । णउणाइ, णउणा, पक्षे णउण ॥

सानुनासिकोच्चार ङित ॥ १६ ॥

ङकारानुबन्ध यत्कार्यं तत्सानुनासिकोच्चार भवति । यथा—कामुकयमुना चामुण्डाऽतिमुक्तके मो ङ् लुक् । काउओ, जउणा । अत्र मकारस्य ङानुबन्धे लोपे शेषस्य स्वरस्य सानुनासिक उच्चार ॥

बहुलम् ॥ १७ ॥

अधिकारोऽयम्। आ शास्त्रपरिसमाप्तेर्यत्प्राकृतलक्षणमुच्यते तद्बहुलं भवतीति वेदितव्यम्। ततश्च क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव भवति। तच्च यथास्थानं दर्शयिष्यामः॥

## दिह्रौ मिथः से ॥ १८ ॥

से समासे दिह्रौ दीर्घह्रस्वौ मिथः अन्योन्यं बहुलं भवतः। तत्र ह्रस्वस्य दीर्घः—अन्तर्वेदि अन्तावेई अन्तवेई। सप्तविंशतिः सत्तावीसा सत्तवीसा। वारिमती वारीमई वारिमई। पतिगृहं पईहरं पइहरं। युवतिजनः जुवईजणो जुवइजणो। वेणुवनं वेणूवणं वेणुवणं। दीर्घस्य ह्रस्वः—णिअम्बसिलक्खलिअवीइमालस्स नितम्बशिलास्खलितवीचिमालस्य। यमुनातटं जउणअडं जउणाअडं। नदीस्रोतः णइसोत्तं णईसोत्तं। गौरीगृहं गोरिघरं गोरीघरं। वधूमुखं बहुमुहं बहूमुहं।

## सन्धिस्त्वपदे ॥ १९ ॥

संस्कृतोक्तः सन्धिः सर्वः प्राकृते भवति पदे न भवति। तुशब्दो विकल्पार्थः। व्यासर्षिः वासेसी वास इसी। विषमातपः विसमायवो विसमआअवो। कवीश्वरः कईसरो कइ इसरो। स्वादूदकं साऊअअं साउ उअअं। अपद इति किम्, मुद्धाए वच्छाइ मुग्धा वत्सा। मह्इ पूजयतीत्यर्थः। बहुलाधिरात् क्वचिदेकपदे च। करिष्यति काही काहिइ। द्वितीयः बीओ बिइओ॥

## न यण् ॥ २० ॥

'इको यणचि' इति यः संस्कृते यणादेशः स प्राकृते न भवति। इवर्णस्य यत्वमुवर्णस्य वत्वं च न भवति। यणिति यवरलानां परिग्रहेऽपि प्राकृते ऋवर्णऌवर्णयोः प्रयोगाभावाद्यत्ववत्वयोरेवाऽयं निषेधः। नखप्रभावल्यरुणः णहप्पहावलिअरुणो। सन्ध्यावध्ववगूढः संझावहुअवऊढो। यणिति किम्? गूढोरसामरसाणुसारिणी॥

## एङः ॥ २१ ॥

नेत्यनुवर्तते। एङित्येदोतौ। एदोतौ संस्कृतोक्तः सन्धिः प्राकृते तु न भवति। देवीए आसणं, देवो अहिणंदणो, अहो अच्छरिअं—अहो आश्चर्यम्, इत्यादयः संस्कृतवदेव॥

## शेषेऽच्यच ॥ २२ ॥

युक्तस्य हलो लोपे योऽच् शिष्यते स शेष, तस्मिन्नचि परे अच सन्धिर्न भवति। गगन एव ग धकुटीं कुर्वन्ति गगण च्चिअ गधउ डिं कुणति। फणामणिप्रदीपिका फणामणि पईवा। ज्योत्स्नापूरितकोश जोण्हाऊरिदकोसो। बहुलाधिकारात् कचिद्विकल्प। कुम्भकार कुभआरो कुभारो। सुपुरुष सुउरिसा सूरिसो। क्वचित्सन्धिरेव। शातवाहन सालाहणो। व्यालवाहणो चक्कराओ इ येतौ प्रायोमहणाच्च वस्य लोपाभावे भवत। लोपे तु सन्धिरेव ॥

## तिङ ॥ २३ ॥

अच इत्येतदनुवर्तते, अचीति च। तिङिति तिबादिविभक्ति। तिङ् सम्बन्धिनोऽच अचि परे सन्धिर्न भवति। भवतीह होइ इह। पिबतूदक पिबउ उअअ ॥

## लोप ॥ २४ ॥

अच अचि परे बहुल लोपो भवति। त्रिदशेश तिअसीसो। निश्वासो च्छ्वासौ णीसासूसासौ ॥

## अन्त्यहलोऽश्रदुदी ॥ २५ ॥

लोप इत्यनुवर्तते। शब्देष्व न्त्यहल अ न्त्यव्यञ्जनस्य लोपो भवति, अश्र दुदी श्रदित्यव्ययम्, उदित्युपसर्गं वर्जयित्वा। यावत् जाव। यशस् जसो। तमस् तमो। जन्मन् जम्मो। अश्रदुदीति किम्? श्रद्धा सद्धा। श्रद्दधाति सद्दहइ। श्रद्धान सद्दहण। उद्गतम् उग्गअ। उन्नतम् उण्णअ। समासे तु वाक्यविभक्त्य पेक्षया अन्त्यत्वमनन्त्यत्व च, तेनोभयमपि भवति। सद्भिक्षु सब्भिक्खू सभिक्खू। सज्जन सज्जणो सजणो। एतद्गुणा एअग्गुणा एअगुणा ॥

## निर्दुरि वा ॥ २६ ॥

निस् दुस् इत्येतयोरुपसर्गयोर न्त्यहलो वा लोपो भवति। णिस्सहं णिसहं। णिघोसो णिग्घोसो। दूसहो दुस्सहो। दुहिओ दुक्खिओ। दूहवो दुब्भवो दुर्भग ॥

## अन्तरि च नाचि ॥ २७ ॥

अन्तर्शब्दे चकारान्निदुरोश्च अ न्त्यहलोऽचि परे लोपो न भवति । अत रंगो, णिरवसेस, दुरुत्तर, दुरवगाह । कचित् अता उवरीति च दृश्यते ॥

## शि र्लुङ् नपुनारि तु ॥ २८ ॥

नपुनर्शब्दे अन्त्यव्यञ्जनस्य शानुबन्ध इकारो लुक् च वा भवति । शित्वात्पूर्वस्य दीर्घ । णउणाइ णउणा णउण । पुनर्शब्देऽपि पुणाइ इति दृश्यते ॥

## अविद्युति स्त्रियामाल् ॥ २९ ॥

स्त्रीलिङ्गे वर्तमानस्याऽन्त्यहल आत्व भवति । लानुबन्धान्नित्य विद्यु च्छब्द वर्जयित्वा । लोपापवाद । सरित् सरिआ । प्रतिपत् पडिवआ । सम्पत् सपआ । बहुलाधिकारादीषत्स्पृष्टयश्रुतिरपि । अविद्युतीति किम् ? विज्जू विज्जुओ ॥

## रो रा ॥ ३० ॥

स्त्रिया वर्तमानस्य रेफस्य रा भवति । गिरा, धुरा, पुरा ॥

## ह क्षुत्ककुभि ॥ ३१ ॥

क्षुत्ककुबित्येतयोरन्त्यहलो हकारो भवति । छुहा । कउहा ॥

## धनुषि वा ॥ ३२ ॥

अन्त्यहल इत्यनुवर्तते । धनु शब्दे अ न्त्यहलो हो वा भवति । धणुहा धणू॥

## स शाशिषि ॥ ३३ ॥

वेत्यनुवर्तते । आशिस्शब्दे शकारस्य सकारो वा भवति । शित्वात्पूर्वस्य दीर्घ । आसीसा आसी ॥

## स आयुरप्सरसोः ॥ ३४ ॥

अनयोरन्त्यव्यञ्जनस्य सकारो वा भवति । दीहाउसो दीहाऊ । अच्छ रसा अच्छरा ॥

## दिक्प्रावृषी ॥ ३५ ॥

दिक्प्रावृडित्येतयोरन्त्यहल सो भवति । योगविभागान्नि यम् । दिसा, पाउसा ॥

## शरदामत् ॥ ३६ ॥

शरत्प्रकाराणामन्त्यहल अत्व भवति । शरत् सरओ । भिषक् बिसओ ॥

## तु सक्खिणभवतजम्मणमहता ॥ ३७ ॥

साद्यादय शब्दा विहितान्त्यव्यञ्जनादेशा वा निपात्यते । सक्खिणो सक्खी । भवतो भव । जम्मण जम्मो । महतो मह ॥

## यत्तत्सम्यग्विष्वक्पृथको मल् ॥ ३८ ॥

यदादीनामव्ययानामन्त्यस्य मकारो भवति । लित्त्वान्नित्यम् । ज, त, सम्म, वीसु, पिह ॥

## मोऽचि वा ॥ ३९ ॥

म इति वर्तते । अन्त्यमकारस्याऽचि परे मकारो वा भवति । उसहमजअ वदे उसह अजअ वदे वृषभमजय वन्दे ॥

## बिन्दुल् ॥ ४० ॥

शब्दानामन्त्यमकारस्य बिन्दुर्भवति । लित्त्वान्नित्यम् । फल, सव्व, गर, बहु ॥

## हलि ङञणनाम् ॥ ४१ ॥

म इति निवृत्तम् । ङञणन–इत्येतेषा हलि व्यञ्जने परे बिन्दुर्भवति । ङ– पङ्क्ति पती । पराङ्मुख परमुहो । ञ–कञ्चुक कचुओ । लाञ्छन लछण। ण–षण्मुख छमुओ । उत्कण्ठा उक्कठा । न–सन्धा सधा । विन्ध्य विंझो ॥

## स्वरेभ्यो वक्रादौ ॥ ४२ ॥

वक्रादिषु प्रथमादिभ्य स्वरेभ्यो यथादर्शन बिन्दुर्भवति । वक वक्रम् । कुमल कुड्मलम् । बुंधण बुध्नम् । पुज पुच्छम् । गुज गुच्छम् । ककोडो काकोंट । दसण दर्शनम् । एषु प्रथमात् । मणसिणी मनस्विनी । मणसिला मन शिला । वअसो वयस्य । पसत्थ पार्श्वस्थम् । पडिसिआ प्रतिश्रत् । एषु द्वितीयात् । उपरिं उपरि । अणिउतअं अतिमुक्तकम् । अनयोस्तृतीयात् ।

पुच्छाश्रबुध्नदर्शनकुड्मलपार्श्वस्थगुच्छकाकोंटा ।
पशुश्मश्रुवयस्यप्रतिश्रदतिमुक्तगृष्टिमार्जारा ॥

स्पर्शनमन शिलोपरिमनस्विवृश्चिकमनस्विनीव्यश्रा ।
मूर्धेति च पूर्तौ तु देवनागोऽपि ॥

यथा-देवरणाअखुवत देवनागखुवक्त्रमिति । कचित्-गट्ठी, मज्जारो, मणसिला-इति च दृश्यते ॥

## त्वासुपोस्तु सुणात् ॥ ४३ ॥

त्वाप्रत्ययस्य सुपश्च सम्बन्धिन सुकारात्णकाराच्च परो वा बिन्दुर्भवति । वच्छेसु वच्छेसुं। अह्मेसु अह्मेसुं। तुह्मेसु तुह्मेसुं। त्वाप्रत्ययस्य णकारात्-काउण काउआण काउआणं। वच्छेण वच्छेणं। वच्छाण वच्छाणं। ममाणं ममाण। तुह्माण तुह्माणं। अह्माणं अह्माणं। सुणादिति किम्? करिअ। अग्गिणो ॥

## लुङ् मासादौ ॥ ४४ ॥

वेति वर्तते। बिन्दुरित्यधिकृतस्य बिन्दोरिति षष्ठ्यन्तपरिणाम। बिन्दो र्मासादिषु लुग्वा भवति। मास मंस। मासल मंसल। पासू पंसू। कास कंस। कह कहं। इआणि इआणिं। दाणि दाणिं। कि करेमि। किं करेमि। समुह संमुह। नूण नूणं। एव एवं।

मासादिस्तु तदानीं कथमेव किं करोमि नूनमिदानीम।
कासमासलसमुखपासुलपासव(?) इतीरितो हि गण ॥

## संस्कृतसंस्कारे ॥ ४५ ॥

लुगिति वर्तते। संस्कृतसंस्कारयोर्बिन्दोर्लुग् भवति। सक्कअं, सक्कारो ॥

## ङेत् किंशुके ॥ ४६ ॥

किंशुके बिन्दो ङानुबन्ध एकारो भवति। केसुओ किंसुओ ॥

## वर्गेऽन्त्यः ॥ ४७ ॥

त्वित्यनुवर्तते। बिन्दोर्वर्गे परे सति तस्यैव वर्गस्यान्त्यो भवति। पङ्को पंको। अङ्गण अंगण। लञ्छण लंछणं। सञ्झा संझा। कण्टओ कंटओ। मण्डण मंडण। अन्तर अंतर। पन्थो पंथो। छन्दो छंदो। बन्धू बंधू। कम्पइ कंपइ। आरम्भो आरंभो। वर्ग इति किम्? संसओ। नित्यमिच्छन्त्यन्ये ॥

## विंशतिषु त्या ल्लोपश्च ॥ ४८ ॥

विंशतिप्रकारेषु ति इत्यनेन सह बिन्दोर्लोपो भवति । शित्त्वात्पूर्वस्य दीर्घः । लित्त्वान्नित्यम् । वीसा विंशतिः । तीसा त्रिंशत् । तेवीसा त्रयो विंशतिः । तेत्तीसा त्रयस्त्रिंशत् । दाढा दंष्ट्रा । सीहो सिंहः । सिंघो इति च दृश्यते ॥

## नाम्नि सिंहदन्ते ॥ ४९ ॥

सिंहदन्तो । नाम्नि इति किम् ? सीहरवो सिंघरवो ॥

## सनमदामशिरोनभो नरि ॥ ५० ॥

सन सान्त नान्त च शब्दरूपं नरि पुलिङ्गे प्रयोक्तव्यम्, अदामशिरो नभः दामन् शिरस् नभस् इत्येतान् वर्जयित्वा । सान्त —जसो, तमो, सदो, मणो, उरो, तेओ, पयो । नान्त —जम्मो जन्म । कम्मो कर्म । वम्मो वर्म । अदामशिरोनभ इति किम् ? दाम । सिर । णह । अन्यत्र—सदस् सअ, सुमनस् सुमणा, सम्म शर्म इति च दृश्यते बहुलाधिकारात् ॥

## शरत्प्रावृट् ॥ ५१ ॥

शरत्प्रावृषौ पुंसि प्रयोज्यौ । सरओ । पाउसो ॥

## अक्ष्यर्थकुलाद्या वा ॥ ५२ ॥

नरीति वर्तते । अक्षिपर्याया कुलादयश्च शब्दा पुलिङ्गे वा प्रयोज्याः । अक्ष्यर्था —एस अच्छी । णच्छाविआ तेणाह्माणमच्छी नर्तिते तेनाऽस्माकमक्षिणी । अञ्जल्यादिपाठात् स्त्रीलिङ्गेऽपि—एसा अच्छी । चक्खू चक्खूइं । नअणा णअणाइं । लोअणा लोअणाइं । कुलादि —कुलो कुलं । वअणो वअणं । माहप्पो माहप्पं । दुक्खो दुक्खं । भाअणा भाअणाइं । विज्जुला विज्जुलाइं । छन्दो छन्दं । कुलादि —

कुलगो विद्युच्छन्दोभाजनमाहात्म्यदुःखवचनानि ।

गोत्ता गोत्ताइं इत्यादि संस्कृतवदेव ॥

## क्लीबे गुणगाः ॥ ५३ ॥

वेत्यनुवर्तते । गुणादय शब्दा नपुंसके वा प्रयोज्या । गुणाइ गुणा । देवाइ देवा । मण्डलग्ग मण्डलग्गो । खग्ग खग्गो । बिन्दूइ बिन्दुणो । कररुहइ कररुहा । रुक्खाइ रुक्खा ।

गुणदेवमण्डलाग्रा खड्गो बिन्दुश्च कररुहो वृक्ष ॥

## स्त्रियामिमाऽञ्जलिगाः ॥ ५४ ॥

इमान्ता अञ्जल्यादयश्च शब्दा स्त्रीलिङ्गे वा प्रयोज्या । एसा गरिमा एस गरिमो । एसा महिमा एस महिमो । एसा णिल्लज्जिमा एस णिल्लज्जिमो । एसा धुत्तिमा एस धुत्तिमो । अञ्जल्यादि —एसा अञ्जली एस अजली । बलीए बलीणो । णिहीए णिहीणो । रस्सीए रस्सीणो । पण्हा पण्हो । अच्छीए अच्छीणो । गढीए गढीणो(१) । कुच्छीए कुच्छीणो । चोरिआ चोरिअ । विहीए विहीणो । पिट्ठी पिट्ठ । पृष्ठम्—इत्वे कृते, स्त्रियामेवेत्येके । अञ्जल्यादि —

कुक्षिबलनिधिरश्मिप्रश्नाक्षिग्रन्थिचौर्यविधिपृष्ठा ।

इमेति तन्त्रेण त्वादेशस्य डिमा इत्यस्य पृथ्व्यादेरिमनिचश्च सङ्ग्रह । त्वादेशस्य स्त्रीत्वमेवेच्छन्त्येके ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ प्रथमाध्यायस्य प्रथम पाद ॥

---

## निष्प्रती ओपरी माल्यस्थोर्वा ॥ १ ॥

निर् प्रति इत्येतावुपसर्गौ माल्यशब्दे स्थाधातौ च परे ओ परि इत्येव यथासख्य वा भवत । ओमल्ल णिमल्ल निर्माल्यम् । परिट्ठा पइट्ठा प्रतिष्ठा । परिटठिअं पइट्ठिअ प्रतिष्ठितम् ॥

## आदे ॥ २ ॥

आदेरित्यधिकारोऽयम । 'अस्तोरखोर च' इति सूत्रात् पृथग्विशेषण वेदितव्यम ॥

## लुगव्ययत्यदाद्यात्तदच ॥ ३ ॥

अव्ययात्त्यदादेश्च परस्य तयोरेवाऽव्ययत्यदाद्योरचो लुग्भवति । अह्मे एत्थ अह्मेत्थ वयमत्र । जइ इमा जइमा यदीमा । जइ अह जइह यद्यहम् ॥

(१) गन्थीए गन्थिणो—इति ख० पु० पाठ ।

## वाऽलाब्वरण्ये ॥ ४ ॥

लुगित्यनुवर्तते । अलाबू अरण्य इत्येतयोरादेर्लुग्वा भवति । लाऊ अलाऊ । रण्ण अरण्ण ॥

## अपेः पदात् ॥ ५ ॥

वेति वर्तते । पदात्परस्याऽपीत्युपसर्गस्यादेर्लुग्वा भवति । किंपि किमपि । तपि तमपि । केणवि केणावि । कहृपि कहृमपि । पदादिति किम् ? अवि णाम ॥

## इते ॥ ६ ॥

पदादिति वर्तते । पदात्परस्य इतिशब्दस्यादेर्लुग् भवति । योगविभागा न्नित्यम् । किमिति किंति । यदिति जंति । तदिति तंति । युक्तमिति जुत्तंति । पदादित्येव । इअ विंझगुहाणिलआए इति विन्ध्यगुहानिलयाया ॥

## तोऽचः ॥ ७ ॥

अचः परस्य इतिशब्दस्यादेरिकारस्य तकारो भवति । तहृत्ति तथेति । झत्ति झटिति । पिअत्ति प्रिय इति । अच इति किम् ? किंति ॥

## शोर्लुप्तयवरशोर्दिः ॥ ८ ॥

शो शषसाना लुप्तयवरशषसानामादे परस्य दिर्दीर्घो भवति । सयोगे उपर्यधोभावेन वर्तमानाना लोपे सति येऽवशिष्टा शषसास्तेषामादेरचो दीर्घो भवतीत्यर्थः । शस्य यलोपे—कश्यप कासवो । आवश्यकम् आवासअ । पश्यति पासइ । वस्य लोपे—अश्व आसो । विश्वास वीसासो । विश्वसिति वीससिइ । रलोपे—विश्राम वीसामो । विश्राम्यति वीसामइ । मिश्र मीस । सस्पर्श सप्पासो । शलोपे—दुःशासन दूसासणो । मनःशिला मणासिला । षस्य यलोप शिष्य सीसो । पुष्य पूसो । मनुष्य मणूसो । वलोपे—विष्वाण वीसाणो । विष्वक् वीस । रलोपे—कर्षक कासओ । वर्षा वासा । वर्ष वासो । षलोपे—निष्षिक्त णीसित्तो । सस्य यलोपे—सस्य सास । कस्यचित् कासइ । वलोपे—विकस्वर विआसरो । निस्स्व णीसो । रलोपे—उस्र ऊसो । विस्रम्भ वीसभो । सलोपे—निस्सह णीसहो । बहुलाधिकारात् बलोपे कचिद् यस्याऽच आदेर्दीर्घ । जिह्वा जीहा । दीर्घान्नेति

प्रतिषेधाच्छेषादेशस्याहा चो खोरिति सूत्रोक्त द्वित्व न भवति ॥

## हे दक्षिणेऽस्य ॥ ९ ॥

दिरित्यनुवर्तते । दक्षिणशब्दे अस्य अवर्णस्य दीर्घो भवति हे चास्य हकारे सति । दाहिणो । हे इति किम् ? दक्खिणो ॥

## तु समृद्ध्यादौ ॥ १० ॥

अस्येत्यनुवर्तते । समृद्ध्यादिषु आदेरवर्णस्य दीर्घो भवति तु । सामिद्धी समिद्धी समृद्धि । पाडिसिद्धी पडिसिद्धी प्रतिसिद्धि । सारिच्छो सरिच्छो सदृक्ष । माणसिनी मणसिनी मनस्विनी । पासुत्तो पसुत्तो प्रसुप्त । पाडिप्पद्धी पडिप्पद्धी प्रतिस्पर्द्धी । पाडिवआ पडिवआ प्रतिपत् । पावासू पवासू प्रवासी । आभिआई अभिआई अभिजाति । पाअड पअड प्रकटम् । पाअअ पअअ प्रकृतम् । पासिद्धी पसिद्धी प्रसिद्धि । पारकेर परकेर परकीयम । चाउरत चउरत चतुर तम् । आपसा अपसो अस्पर्श । पावअण पवअण प्रवचनम् । पारोहो परोहो प्ररोह । इत्यादि ।

प्रसिद्धिसदृक्षमनस्विनीप्रसुप्तप्रवासिचतुरन्ता ।
अभिजात्यस्पर्शप्रवचनप्ररोहपरकीया ॥
प्रतिपत्प्रकटप्रकृता सह प्रतिस्पर्द्धिना समृद्ध्यादि ॥

## स्वप्नादाविल् ॥ ११ ॥

स्वप्नादिषु शब्देष्वादेरवर्णस्य इत्व भवति। लित्त्वान्नित्यम्। सिविणो सिमिणो स्वप्न । विअण व्यजनम्। विलीअ व्यलीकम्। किविणो कृपण । मिइंगो मृदङ्ग । ईसि ईषत् । वेडिसो वेतस । दिण्णं दत्तम् । उत्तिमो उत्तम । मिरिअ मरिचम्। वहुलाधिकाराण्णत्वाभावे इत्व न भवति । दत्त ।

वेतसकृपणमृदङ्गोत्तमदत्तेषद्व्यलीकमरिचाश्च ।
व्यञ्जनमिति स्वप्नादिर्भाषाविद्भि समाख्यात ॥

## पक्वाङ्गारललाटे तु ॥ १२ ॥

पक्व अङ्गार ललाट इत्येतेषु आदेरस्य इत्व भवति तु । पिक्क पक्क । इंगारो अङ्गारो । णिडाल णडाल ॥

## सप्तपर्णे फो ॥ १३ ॥

सप्तपर्णे फो द्वितीयस्य इत्व भवति तु । छत्तिवण्णो छत्तवण्णो ॥

## मध्यमकतमे च ॥ १४ ॥

चकार फोरित्यस्यानुवृत्त्यर्थम् । मध्यमकतमयोर्द्वितीयस्याऽच इत्व भवति । पृथग्यागान्नित्यम् । मज्झिमो । कइमो ॥

## हरे त्वी ॥ १५ ॥

हरशब्दस्यादेरच ईत्व भवति तु । हीरा हरो ॥

## उल् ध्वनिगवयविष्वचि वः ॥ १६ ॥

ध्वनिगवयविष्वक्शब्देषु वकारसम्बन्धिनोऽस्य उत्व लिङ्भवति । धुणी । गउआ । वीसु ॥

## ज्ञो णोऽभिज्ञादौ ॥ १७ ॥

उत्वमनुवर्तते । अभिज्ञादिषु ज्ञकरादेशस्य णस्य सम्बन्धिनोऽवर्णस्य उत्व भवति । अभिण्णू अभिज्ञ । सव्वण्णू सर्वज्ञ । आगमण्णू आगमज्ञ । कअण्णू कृतज्ञ । ण इति किम् ? अहिज्जा अभिज्ञ । अभिज्ञादाविति किम् ? पण्णो प्राज्ञ । अहिण्णो अभिज्ञ । येषा ज्ञादेशणकारसम्बधिन अस्य उत्व दृश्यते तेऽभिज्ञादय ॥

## स्तावकसास्ने ॥ १८ ॥

स्तावकसास्नाशब्दयोरादेरस्य उत्व भवति । थुवओ । सुण्हा ॥

## चण्डखण्डिते णा वा ॥ १९ ॥

चण्डखण्डितशब्दयोणकारेण सहितस्यादेरवर्णस्य उद्भवति । चुडं चण्डं । खुडिओ खण्डिओ ॥

## प्रथमे पथो ॥ २० ॥

प्रथमशब्दे पकारथकारयो सम्बन्धिनोऽवर्णस्य युगपत्क्रमेण च उत्वं भवति । पुढुम पढुम पुढम पढम ॥

## आर्यायां र्यः श्वश्र्वामूल् ॥ २१ ॥

श्वश्रूवाचिन्यार्याशब्दे यकारसम्बन्धिनोऽवर्णस्य ऊत्वं लिद्भवति । अज्जू । श्वश्र्वामिति किम् ? अज्जा ।

## आसारे तु ॥ २२ ॥

आसारे आदेरवर्णस्य ऊ त्वं भवति तु । ऊसारो आसारो ।

## तोऽन्तर्येल् ॥ २३ ॥

अन्तर्शब्दे तकारसम्बन्धिनोऽवर्णस्य एत्वं लिद्भवति । अन्तःपुरम् अंतेउरं । अन्तःसहम् अंतेसहं । अन्तश्चारी अंतेआरी । क्वचिन्न भवति । अन्तर्गतम् अंतग्गअं । अन्तर्विस्रम्भणिवेसिआण अन्तर्विश्रम्भनिवेशितानाम् ॥

## पारावते तु फो ॥ २४ ॥

पारावतशब्दे फोर्द्वितीयस्याऽस्य एत्वं तु भवति । पारेवओ पारावओ ॥

## उत्करवल्लीद्वारमात्रचि ॥ २५ ॥

उत्करवल्लीद्वारशब्देषु मात्रच्प्रत्यये चाऽऽदेरवर्णस्य एत्वं वा भवति । उक्केरो उक्करो । वेल्ली वल्ली । देरं दारं । पक्षे दुआरं । मात्रच्—एत्तिअमेत्तं एतावन्मात्रम् । बहुलाधिकारान्मात्रशब्देऽपि । भोअणमेत्तं भोजनमात्रम् ॥

## शय्यादौ ॥ २६ ॥

शय्यादिष्वादेरवर्णस्य एत्वं भवति । पृथग्योगान्नित्यम् । सेज्जा शय्या । एत्थ अत्र । गेज्झं ग्राह्यम् । गेण्डुअं कन्दुकम् । इत्यादि ॥

## वाऽऽर्द्रे उदोत् ॥ २७ ॥

आर्द्रशब्दे आदेरवर्णस्य उत्वमोत्वं च वा भवतः । उल्लं ओल्लं । पक्षे अल्लं अद्दं । बाहसलिलप्पवहेण ओल्लेइ बाष्पसलिलप्रवाहेणाऽऽर्द्रयति ॥

## स्वपि ॥ २८ ॥

उदादित्यनुवर्तते । स्वपिधातोरादेरवर्णस्य उदोतौ भवतः । पृथग्योगान्नित्यम् । सुवइ । सोवइ ॥

## ओद्वाल्या पङ्क्तौ ॥ २९ ॥

पङ्क्तिवाचिन्यालीशब्दे आदेरवर्णस्य ओत्वं भवति । ओली । पङ्क्ताविति किम्? आली सखी ॥

## फोः परस्परनमस्कारे ॥ ३० ॥

ओदित्यनुवर्तते । परस्परनमस्कारशब्दयो फोर्द्वितीयस्याऽस्य ओत्व भवति । परोप्पर । णमोक्कारो ॥

## पद्मे मि ॥ ३१ ॥

पद्मशब्दे आदेरवर्णस्य मकारे परे ओत्व भवति । पोम्म । मीति किम्? पदुम ।

## त्वर्पौ ॥ ३२ ॥

अर्पयतौ धातावादेरस्य ओद्भवति तु । ओप्पेइ अप्पेइ । ओप्पिअ अप्पिअ ॥

## ईल् खल्वाटस्त्यानयोरात ॥ ३३ ॥

खल्वाटस्त्यानयोरादेरवर्णस्य ईत्व लिद्भवति । खल्लीडो । थीण । सखी-अमिति स्त्य समक्खा इति खादेशे क्तप्रत्यया ते सिद्धम् ॥

## इत्तु सदादौ ॥ ३४ ॥

आदित्यनुवर्तते । सदा इत्यादिष्वादेराकारस्य इत्व भवति तु । सइ सआ सदा । कुप्पिसो कुप्पासो कूर्पास । णिसिअरो णिसाअरो निशाकर इत्यादि ॥

## आचार्ये चो ह्रश्च ॥ ३५ ॥

आचार्ये चकारसम्बन्धिन आतो ह्रस्वो भवति । आअरिओ आइरिओ ॥

## श्यामाके म ॥ ३६ ॥

ह्र इत्यनुवर्तते । श्यामाके मकारस्याऽऽतो ह्रस्वो भवति । सामओ ॥

## न वाऽव्ययोत्खातादौ ॥ ३७ ॥

अव्यये उत्खातादौ चादेरातो ह्रस्वो न वा भवति । अव्यये—जह जहा । तह तहा । अहव अहवा । व वा । ह हा । इत्यादि । उत्खातादि —उक्खअ उक्खाअ ।

कुमरो कुमारो। खइर खाइर। बलआ बलाआ बलाका। पअअ पाअअ प्राकृतम्। चमरो चामरो। कलओ कलाओ कलाद स्वर्णकार। हलिओ हालिओ हालिक कृषीवल। णराओ णाराओ नाराच। तलविण्ट तालविण्ट तालवृन्तम्। ठविओ ठाविओ स्थापित। पट्ठविओ पट्ठाविओ प्रस्थापित। सठविओ संठाविओ सस्थापित। इत्यादि। केचिद्ब्राह्मणपूर्वाह्णयोरपीच्छन्ति। बह्मणो बाह्मणो। पुव्वण्हो पुव्वाण्हो।

उत्खाताव्ययमथवा वा हा यथा तथेत्यपि च।
प्राकृतकुमारचामरसस्थापिततालवृन्तनाराचा॥
प्रस्थापितसस्थापितकलादखादिरहालिकबलाका।
सयोगे ह्रो न स्याद् ब्राह्मणपूर्वाह्णयोर्दीर्घः॥

## घञि वा ॥ ३८ ॥

घञ्निमित्तो यो वृद्धिरूप आकारस्तस्यादिभूतस्य ह्रस्वो वा भवति। पुनर्वाग्रहणादुत्तरत्र न विकल्प। पवहो पवाहो प्रवाह। पहरो पहारो प्रहार। पअरो पआरो प्रकार, पवारो वा। पत्थओ पत्थावो प्रस्तार। क्वचिन्न भवति। राग राओ। भाग भाओ॥

## स्वरस्य बिन्द्वमि ॥ ३९ ॥

बिन्दौ अमि द्वितीयैकवचने च परे स्वरस्य ह्रस्वो भवति। मास मस। मासल मसल। पासु पसू। कस कास्यम्। वाशिक वसिओ। काञ्चनं कचण। लाञ्छन लछण। अमि यथा—गग। माल। नइ। बहु। वच्छ॥

## सयोगे ॥ ४० ॥

सयोगे परे पूर्वस्य स्वरस्य ह्रस्वो भवति। आ—आम्र अब। ताम्र तब। विरहाग्नि विरहग्गी। अमात्य अमच्चो। काव्य कव्व। ई—मुनीन्द्र मुणिन्दो। तीर्थं तित्थ। शीघ्र सिग्घ। ऊ—चूर्ण चुण्णो। सूत्र सुत्त। पूर्वं पुव्व। ए—नरेन्द्र णरिन्दो। म्लेच्छ मिलिच्छो। ऐ—दृष्टैकस्तनपट्टं दिट्ठेक्कत्थणपट्ठ। ओ—अधरोष्ठम् अहरुट्ठो। नीलोत्पल णीलुप्पलं। एदोतो क्वचित्स्वरूपेण ह्रस्व। एक एक्को। नेत्र णेत्त। ग्राह्य गेज्झ। स्तोक थोक। तुण्ड तोण्डं। इत्यादि॥

## त्वेदितः ॥ ४१ ॥

संयोग इति वर्तते। आदेरिकारस्य संयोगे परे एत्व तु भवति। पेण्ड पिण्डम्। धम्मेल्ल धम्मिल्लम्। सेन्दूर सिन्दूरम्। वेल्ल विल्ल बिल्वम्। वेण्णू बिण्णू विष्णु। क्वचिन्न भवति। चिन्ता॥

## मिराया लित् ॥ ४२ ॥

इत इत्यनुवर्तते, एदिति च। मिराशब्दे इत एत्व लिद्भवति। मेरा। सीमेति यावत्॥

## मूषिकविभीतकहरिद्रापथिपृथिवीप्रतिश्रुत्यत् ॥ ४३ ॥

मूषिकादिष्वादेरिकारस्य अकारो भवति। मूषिक मूसओ। विभीतक वहेडओ। हरिद्रा हलद्दी। पथि पहो। अकारान्ते सत्यपि पथशब्दे पथिशब्दस्य रूपान्तरनिवृत्त्यर्थमस्य योग। पृथिवी पुहवी पुढवी। प्रतिश्रुत् पडसुआ प्रतिध्वनि॥

## रस्तित्तिरौ ॥ ४४ ॥

अदित्यनुवर्तते। तित्तिरिशब्दे रसम्बन्धिन इकारस्य अत्व भवति। तित्तिरो॥

## इतौ तो वाक्यादौ ॥ ४५ ॥

वाक्यादिभूते इतिशब्दे तकारसम्बन्धिन इत अद्भवति। इअ विअसिअ कुमुअसरो इति विकसितकुमुदसर। वाक्यादाविति किम्? पिओत्ति॥

## वेड्गुदशिथिलयो. ॥ ४६ ॥

इङ्गुदशिथिलयोरादेरित अत्व वा भवति। अगुअ इगुअ। सढिल सिढिल। पसढिल पसिढिल। णिम्माअ णिम्मअ—इत्येतौ निर्मातृनिर्मिताभ्या भविष्यत॥

## उ युधिष्ठिरे ॥ ४७ ॥

युधिष्ठिरे आदेरित उत्व वा भवति। जुहुट्ठिलो जुहिट्ठिलो जहुट्ठिलो जहिट्ठिलो॥

## द्विनीक्षुप्रवासिषु ॥ ४८ ॥

उत्वमनुवर्तते। द्विशब्दे नीत्युपसर्गे इक्षुप्रवासिशब्दयोश्च आदेरित उत्व भवति। पृथग्योगान्नित्यम्। द्विमात्र दुमत्तो। द्विजाति दुआई। द्विविध दुविहो। द्विरेफ दुरेहो। द्विवचन दुवअण। द्विधाविध दुहाविओ। बहुलाधिकारात्क्वचिद्विकल्प। दुउणो दिउणो विउणो द्विगुण। दुईओ विईओ द्वितीय। क्वचिन्न भवति। द्विज दिओ। द्विरद दिरओ। द्विधागत दिहागओ। क्वचिदोत्वमपि। द्विवचन दोवअण। ने—णुमज्जइ निमज्जति। क्वचिन्न भवति। निपतति णिवडइ। इक्षु उच्छू इच्छू। प्रवासी पवासू पावासू॥

## तु (१)निर्झरद्विधाकृञोरोञा ॥ ४९ ॥

निर्झरशब्दे द्विधाकृञ्शब्दे च आदेरितो नकारेण सह ओत्व तु भवति। ओज्झरो णिज्झरो निर्झर। दोहाकिज्जइ दुहाकिज्जइ द्विधाक्रियते। दोहाकिअ दुहाकिअ द्विधाकृतम्। कृञिति किम्? दिहागअ द्विधागतम॥

## ईत काश्मीरहरीतक्योर्लोलौ ॥ ५० ॥

काश्मीरहरीतकीशब्दयोरीकारस्य आ अ इत्येतौ लितौ यथासख्य भवत। कहारो। हरडई॥

## गभीरग इत् ॥ ५१ ॥

ईत इत्यनुवर्तते। गभीरादिष्वादेरीकारस्य इत्व भवति। गहिरो गभीर। सिरिसो शिरीष। आणिअ आनीतम्। क्रियामीकारोऽपि दृश्यते। आणीदा भुअणब्भुपक्कजणणी आनीता भुवनाद्भुतैकजननी। गहिअ गृहीतम्। विलिअ व्रीलितम्। विइओ द्वितीय। पडिवअ प्रदीपितम्। तइओ तृतीय। जिअओ जीवन्। ओसिअतो अवसीदन्। पसिअ प्रसीद। वम्मिओ वल्मीक। इत्यादि। तआणिं इति तु तदानींशब्दस्य स्वरस्य 'बिन्द्वमी'ति ह्रस्वे सिद्धम्॥

## वा पानीयगे ॥ ५२ ॥

पानीयादिष्वादेरीकारस्य इत्व वा स्यात्। पाणिय पाणीय पानीयम्। अलिअ अलीअ अलीकम्। करिस करीस करीषम्। उवणिअ उवणीअ उपनीतम्। जिअइ जीअइ जीवतीत्यादि॥

---

(१) त्वोन्निर्झरद्विधाकृञोर्ना—इति क० पु० पाठः।

## उल् जीर्णे ॥ ५३ ॥

जीर्णशब्दे ईत उत्व भवति । लित्त्वान्नित्यम् । जुएण । क्वचिन्न-जिएणे भोअणमत्ते जीर्णे भोजनमात्रे ॥

## तीर्थे ह्यूल् ॥ ५४ ॥

तीर्थे ईत ऊत्व भवति हि हकारे सति । तूह । हीति किम् ? तित्थ ॥

## विहीनहीने वा ॥ ५५ ॥

विहीनहीनयोरीत ऊत्व तु भवति । विहूण विहीण । हूण हीण । अनयो रिति किम् ? पहीणजरमलणो ॥

## एल् पीठनीडकीदृशपीयूषविभीतकेदृशापीडे ॥ ५६ ॥

पीठादिष्वादेरीत एत्व लित्त्वान्नित्य भवति । पेढ । नेड । केरिसो । पेऊस । वहेडओ । एरिसो । आमेलो । बहुलाधिकाराच्च पीठनीडयोर्विकल्प । पीठ । नीड ॥

## त्वदुत उपरिगुरुके ॥ ५७ ॥

उपरिगुरुकयोरादेरुकारस्य अद्भवति तु । अवरि उवरि । गरुओ गुरुओ । कप्रत्ययपरिग्रहाद् गुरौ न भवति । गुरू ॥

## मुकुलादौ ॥ ५८ ॥

उत इत्यनुवर्तते, अदिति च । मुकुलादिष्वादेरुकारस्य अद्भवति । पृथग्योगा न्न विकल्प । मउल मुकुलम् । मउड मुकुटम् । यद्यपि सस्कृते, तथाप्यय योगो मुकुटशब्दस्य रूपा तरनिवृत्त्यर्थ । मउर मुकुर । अगरू अगुरु । गलोई गुडूची । गुरुई गुर्वी । जहुट्ठिलो युधिष्ठिर । सोअमल्ल सौकुमार्यम् । इत्यादि । बहुलाधिकारात् क्वचिदात्व भवति । विद्दत विदाओ ॥

## रो भ्रुकुटीपुरुषयोरित् ॥ ५९ ॥

भ्रुकुटीपुरुषयो रेफसम्बन्धिन उकारस्य इत्व भवति । भिउडी । पुरिसो । पउरिस पौरुषम् ॥

## क्षुत इत् ॥ ६० ॥

त्पुत उत ईत्व भवति । छीअं । पक्षे छुअं ॥

दोदोऽनुत्साहोत्सन्न ऊच्छसि ॥ ६० ॥

उदित्युपसर्गस्य शकारसकारयो परयोर्दकारेण सह ऊत्व भवति, उत्साहो त्सन्नशब्दौ वर्जयित्वा । उच्छ्वास ऊसासो । उच्छ्वसिति ऊससिइ । उद्गता शुका यस्मिन् स उच्छुक ऊसुओ । उत्सुक ऊसुओ । उत्सव ऊसओ । उत्सरति ऊसरइ । उत्सिक्त ऊसित्तो । अनुत्साहोत्सन्न इति किम् ? उच्छाहो । उच्छण्णो ॥

दुरो रलुकि तु ॥ ६२ ॥

ऊदित्यनुवर्तते । दुर इत्युपसर्गस्य रलुकि रेफलोपे सति आदेरुत ऊद्वा भवति । दूसहो दुसहो । रलुकीति किम् ? दुस्सहो ॥

सुभगमुसले ॥ ६३ ॥

ऊदित्यनुवर्तते । सुभगमुसलयोरुत ऊद्वा भवति । सूहओ सुहओ । मूसल मुसल ॥

हश्चौत् कुतूहले ॥ ६४ ॥

कुतूहले आदेरुत औत्व भवति हश्च, तत्सनियोगेन ऊतो ह्रस्वश्च । कोउ हल कुऊहल कुतूहलम् ॥

स्तौ ॥ ६५ ॥

ओदित्यनुवर्तते । स्तौ सयुक्ते परे आदेरुत ओत्व भवति । तुण्ड तोण्डं । पुष्कर पोक्खर । कुट्टिम कोट्टिम । पुस्तक पोत्थअ । मुस्ता मोत्था । मुक्तगर मोत्तअरो । पुद्गर पोग्गलो । कुन्द कोन्द । व्युत्क्रा त वोकत ॥

सूक्ष्मेऽद्वोत ॥ ६६ ॥

सूक्ष्मशब्दे ऊत अत्व वा भवति । सण्ह सुण्ह ॥

अल् दुकूले ॥ ६७ ॥

ऊत इत्यनुवर्तते । दुकूले ऊत अल् इत्यादेशो भवति । लकारो नाऽनु बन्ध । दुअल्लं दुऊलं ॥

## ईदुद्व्यूढे ॥ ६८ ॥

उद्व्यूढे ऊत ईत्व वा भवति । उव्वीढ । उव्वूढ ॥

## उल् कण्डूयतिहनूमद्वातूले ॥ ६९ ॥

कण्डूयतौ धातौ हनूमद्वातूलयोश्च आदेरूत उत्व लिद्भवति । कण्डुअइ । हणुमतो । वाउलो ॥

## वा मधूके ॥ ७० ॥

मधूके ऊत उत्व वा भवति । महुअ महूअ ॥

## इदेन्नूपुरे ॥ ७१ ॥

वेत्यनुवर्तते । नूपुरे ऊत इदेतौ वा भवत । णिउर णेउर णूउर ॥

## ओल् स्थूणातूणमूल्यतूणीरकूर्परगुडूचीकूष्माण्डी-ताम्बूलीषु ॥ ७२ ॥

एषु ऊत ओत्व लिद्भवति । थोणा । तोण । मोल्ल । तोणीर । कोप्परं । गलोई । कोह्मडी । तबोली । बहुलाधिकारात् स्थूणातूणयोर्विकल्प । थूणा । तूण ॥

## ऋतोऽत् ॥ ७३ ॥

आदे ऋकारस्याऽत्व भवति । घृत घअ । तृण तण । कृत कअ । वृषभ वसहो । मृग मओ ॥

## आद्वा मृदुत्वमृदुककृशासु ॥ ७४ ॥

ऋत इत्यनुवर्तते । मृदुत्वादिष्वादे ऋकारस्याऽऽत्व वा भवति । माउत्त मउत्त । माउअ मउअ । कासा कसा ॥

## इल् कृपगे ॥ ७५ ॥

कृप इत्यादिषु शब्देषु ऋत इत्व भवति । लित्वान्नित्यम् । किवो कृप । णिवो नृप । किवा कृपा । किवणो कृपण । किवाणो कृपाण । किसो कृश । किसाणू कृशानु । किई कृति । किसरो कृसर । किच्छ कृच्छ्रम् । किसओ

कृषक । तिसिओ तृषित । इसी ऋषि । धिई धृति । विञ्छिओ वृश्चिक । वित्त वृत्तम् । वित्ती वृत्ति । पिंही पृथ्वी । किच्छा कृत्या । घुसिण घुसृणम् । घिणा घृणा । इद्धी ऋद्धि । समिद्धी समृद्धि । गिंद्धी गृद्धि । विद्धकई वृद्ध कपि । पिहा स्पृहा । विसी बृसी । हिअअ हृदयम् । उक्खिट्ट उत्कृष्टम् । मिट्ठ मृष्टम्, रस एव । अ यत्र मठ । दिट्ठ दृष्टम् । विहिण्णो वितृष्ण । सइ सकृत् । दिट्ठी दृष्टि । गिट्ठी गृष्टि । सिट्ठी सृष्टि । सिआलो शृगाल । वाहित्त व्याहृतम् । बिंहिअ बृंहितम् । तिप्प तृप्तम् । सिट्ठ सृष्टम् । सिंगारा शृङ्गार । भिंगो भृङ्ग । मिओ मृग । भिऊ भृगु । भिङ्गारो भृङ्गार । इत्यादि ॥

## शृङ्गमृगाङ्कमृत्युधृष्टमसृणेषु वा ॥ ७६ ॥

शृङ्गादिषु ऋत इत्व वा स्यात् । सिंग सग । मिअङ्को मअङ्को । मिच्चू मच्चू । धिट्ठो धट्ठो । मसिण मसण ॥

## पृष्ठेऽनुत्तरपदे ॥ ७७ ॥

पृष्ठशब्दे अनुत्तरपदे ऋत इत्व वा भवति । पिट्ठ पट्ठ । अनुत्तरपद इति किम् ? महिपट्ठ महीपृष्ठम् ॥

## उद् वृषभे वृ ॥ ७८ ॥

वृषभे वृ इत्येतस्य उत्व वा स्यात् । उसहो वसहो ॥

## वृन्दारकनिवृत्तयोः ॥ ७९ ॥

उदित्यनुवर्तते । अनयो ऋत उद्भवति । वुदारओ वदारओ । णिउत्त णिअत्त ॥

## ऋतुगे ॥ ८० ॥

ऋत्वादिषु शब्देषु आदे ऋत उत्व भवति । पृथग्योगान्नित्यम् । उऊ ऋतु । उसहो ऋषभ । पाहुड प्राभृतम । पहुडि प्रभृति । भुई भृति । णिहुअ निभृतम् । परहुअ परभृतम् । णिउअ निवृतम् । सवुअ सवृतम् । णिउत्ती निवृत्ति । पउत्ती प्रवृत्ति । पाउसो प्रावृट् । वुत्तंतो वृत्तान्त । वुन्दं वृन्दम् । वुन्दावण वृन्दावनम् । पुहई पृथिवी । वुड्ढो वृद्ध । उज्जू ऋजु । तैलादित्वात् द्वित्वम् । मुणालं मृणालम् । पुट्ठो स्पृष्ट । पउट्ठो प्रवृष्ट । वुड्ढी वृष्टि । परामुट्ठ

परामृष्ट । भाउओ भ्रातृक । पिउओ पितृक । जामादुओ जामातृक । माउआ मातृका । पाउड प्राकृतम् । प्रत्यादित्वात्तस्य ड । हुई हृति । इत्यादि ॥

## गौणान्त्यस्य ॥ ८१ ॥

गौणस्य-उपसर्जनस्य योऽन्त्य ऋकारस्तस्य उद्भवति । माउमण्डल । माउघर । माउसिआ । माउच्छा । पिउसिआ । पिउच्छा । पिउवण । पिउवई ॥

## इदुन्मातु ॥ ८२ ॥

गौणस्य मातृशब्दस्य ऋत इदुतौ भवत । माइघर माउघर । क्वचिदगौणस्यापि । माईण ॥

## वृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे ॥ ८३ ॥

इदुदित्यनुवर्तते । वृष्ट्यादिषु ऋत इदुतौ भवत । विट्ठी वुड्ढी वृष्टि । पिह पुह पृथक् । मिअङ्गो मुअङ्गो मृदङ्ग । णत्तिओ णत्तुओ नप्तृक । विट्ठो वुट्ठो वृष्ट ॥

## तु बृहस्पतौ ॥ ८४ ॥

ऋत इदुतौ तु भवत । बिहप्फई बुहप्फई बहुप्फई ॥

## उदूदोल् मृषि ॥ ८५ ॥

मृषाशब्दे ऋत उत्व ऊ व ओत्व च भवति । लित्वान्न विकल्प । मुसा मूसा मोसा। मुसावाओ मृषावाद ॥

## वृन्त इदेङ् ॥ ८६ ॥

वृन्ते ऋत इदेङ् वा भवति । ए ओ एङ् , इच्च एङ् च इदेङ् । इत्वमेत्व मोत्वमित्यर्थ । विंट वेंट वोंट ॥

## ढिरादृते ॥ ८७ ॥

आदृते ऋतो ढिरादेशो भवति । आढिओ ॥

## दृप्तेऽरि सा ॥ ८८ ॥

दृप्ते ऋत पकारतकाराभ्या सह अरि-इत्यादेशो भवति । दरिओ। दरिअसीहेण ॥

## केवलस्य रि ॥ ८९ ॥

ऋत केवलस्य व्यञ्जनेनाऽसम्पृक्तस्य रि इत्यादेशो भवति । रिच्छो ऋक्ष ।

## दृश्यक्सक्विनि(१) ॥ ९० ॥

अ, क्स, किन् इत्येतद् ते दृशिधातौ ऋतो रित्व भवति । अ-सरिसो सदृश । क्स—सरिच्छो सदृक्ष । क्विन्—सरी सदृक् । सरिवण्णो । सरिरूवो । एवम्—एआरिसो । भवारिसो । जारिसो । तारिसो । कीरिसो । एरिसो । तुह्मारिसो । अक्सयो साहचर्यात् त्यदाद्यन्यादिविहित किन् इह गृह्यते । क्सकिनो साहचर्यात् त्यादादीत्यादिसूत्रविहित कञ् इह परिगृह्यते ॥

## ऋतुऋजुऋणऋषिऋषभे वा ॥ ९१ ॥

एषु ऋतो रित्व वा स्यात् । रिऊ उऊ । रिजू उज्जू । रिण उण । रिसी उसी । रिसहो उसहो ॥

## क्लृप्त इलि ॥ ९२ ॥

क्लृप्त इत्यत्र आदेरच इलि इत्यादेशो भवति । किलित्त ॥

## चपेटाकेसरदेवरसैन्यवेदनास्वेचस्त्वित् ॥ ९३ ॥

एषु एच सन्ध्यक्षराणामित्व भवति तु । चविडा चवेडा चपेटा । किसर केसर केसरम् । दिअरो देअरो देवर । सिन्न सेन्न दैत्यादित्वात् सइन्न सैन्यम् । विअणा वेअणा वेदना । महिला महेला इत्येतौ तत्समावेव ॥

## सैन्धवशनैश्चरे ॥ ९४ ॥

एच इत्यनुवर्तते । सैन्धवशनैश्चरयोरादेरेच इत्व भवति । पृथग्योगा न्नित्यम् । सिन्धवं । सणिच्छरो ॥

---

( १ ) दृशि क्सकिपि—इति क० पु० पाठ ।

## त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च क्तो ॥ ९५ ॥

एषु एच अत्व भवति तु, तत्सनियोगेन यथासम्भव कतकारयोश्च वकारादेशो भवति। सररुह सरोरुह। मणहर मणोहर। पवट्ठो पओट्ठो। आवज्ज आओज्ज। अणणण अणणोणण। सिरवेअणा सिरोवेअणा—इत्येतौ शिरो वेदनाया साध्यमानसिद्धावस्थयोरेव भवत ॥

## कौक्षेयक उत् ॥ ९६ ॥

कौक्षेयक आदेरेच उत्व भवति तु । कुच्छेअअ कोच्छेअअ ॥

## शौण्डगेषु ॥ ९७ ॥

शौण्डादिष्वादेरेच उत्व भवति । योगविभागान्न विकल्प । सुण्डो शौण्ड । सुण्डोअणी शौण्डोदनि । मुञ्जाअणो मौञ्जायन । सुदेर सौन्दर्यम् । सुगन्धत्तण सौगन्ध्यम् । दुवारिओ दौवारिक । सुवण्णिओ सौवर्णिक । पुलोमी पौलोमी । इत्यादि ॥

## गव्यउदाईत् ॥ ९८ ॥

गोशब्दे एच अउ आई इत्येतौ भवत । गउओ हरस्स । एसा गाई ॥

## ऊ स्तेने वा ॥ ९९ ॥

स्तेने सन्ध्यक्षरस्य ऊत्व वा भवति । थूणो थेणो ॥

## सोच्छ्वासे ॥ १०० ॥

सोच्छ्वासशब्दे एच ऊ भवति । पृथग्योगान्नित्यम् । सूसासो ॥

## ऐच एङ् ॥ १०१ ॥

ऐच ऐकारौकारयो एङ् एकारौकारौ यथासख्य भवत । ऐ—शैल सेलो । त्रैलोक्य तेल्लोक्क । ऐरावण एरावणो । कैलास केलासो । वैद्य वेज्जो । कैटभ केडवो । वैधव्य वेहव्व । औ—कौमुदी कोमुई । यौवन जोव्वण । कौस्तुभ कोत्थुहो । कौशाम्बी कोसम्बी । क्रौञ्च कोञ्चो । कौशिक कोसिओ ॥

## अइ तु वैरादौ ॥ १०२ ॥

ऐच इत्यनुवर्तते । वैरादिष्वादेरैच अइ इत्यादेशो भवति तु । वैर वइर वेर । वैशम्पायन वइसपाअणो वेसपाअणो । वैशिक वइसिअ वेसिअ । वैश्रवण वइसवणो वेसवणो । चैत्र चइत्तो चेत्तो । कैलास कइलासो केलासो । वैद्य वइज्जो वेज्जो । कैटभ कइडहो केडहा । वैधव्य वइहव्व वेहव्व । वैतालिक वइआलिओ वेआलिओ । कैरव कइरव केरव । दैव दइव देव । इत्यादि ॥

## दैत्यादौ(१) ॥ १०३ ॥

दैत्यादिष्वादेरैच अइ इत्ययमादेशो भवति । पृथग्योगान्नित्यम् । दैत्य दइच्चो । दैन्य दइण्ण । दैवत दइवअ । कैतव कइअव । वइअब्भो वैदर्भ । वइसाहो वैशाख । अइसरिअ ऐश्वर्यम् । वइअवणो वैजवन । भइरवो भैरव । वइएसो वैदेश । वइसाणरो वैश्वानर । वइदेहो वैदेह । वइसालो वैशाल । सइर स्वैरम् । चइत्त चैत्यम् । चैत्यविशेषे न भवति । चेतअ ॥

## नाव्यावः ॥ १०४ ॥

नौशब्दे ऐच आव इत्यादेशो भवति । णावा ॥

## गौरव आत् ॥ १०५ ॥

गौरवे ऐच आत्व भवति । गारव ॥

## पौरगे चाऽउत् ॥ १०६ ॥

पौरादिषु चकाराद्गौरवे च ऐच अउ इत्यादेशो भवति । पउरो पौर । सउरो सौर । मउली मौलि । कउरवो कौरव । गउडो गौड । कउलो कौल । कउसल कौशलम् । पउरिस पौरुषम् । कउच्छेअअ कौक्षेयकम् । सउह सौधम् । मउण मौनम् । गउरव गौरवम् । इत्यादि ॥

## उच्चैर्नीचैसोरअः ॥ १०७ ॥

उच्चैर्नीचै शब्दयोरैच अअ इत्यादेशो भवति । उच्चअ । णीचअ । उच्चनीचाभ्या कप्रत्यये सिद्धेऽपि उच्चैर्नीचैसोस्तु रूपान्तरनिवृत्त्यर्थं वचनम् ॥

## ई धैर्ये ॥ १०८ ॥

---

(१) दैत्यगेष–इति क पु पाठ ।

धैर्ये ऐच ईत्वं भवति । धीर । धीर हरइ विसाओ ॥

## वा पुआय्याद्याः ॥ १०९ ॥

पुआयी इत्यादय शब्दा स्वराद्यादेशविशेषिता वा निपात्यन्ते । पुआयी पिशाच उन्मत्तश्च । ऊणदिअ आनन्दितम् । तोब्बरो तुम्बुरु । माहिवाओ माघ वात । सइकोडी शतकोटि । माइन्दो माकन्द । ओन्दुरो उन्दुरु । आलिआ आली । तणसोल्ल तृणशूल्य, मल्लिकेत्यर्थः । अरिट्ठो अरिष्ट दैत्य काको वा । दरिअ लघु, शीघ्रमित्यर्थ । किरी किरि, वराह इत्यर्थ । वामलूरो वामलूर वल्मीकम् । वसो वृक्ष । मूसिओ मूषिक । वत्त वृन्तम् । हेरिंबो हेरम्ब । चिक्क स्तोक स्पृष्ट च । चलणाओहो चरणायुध । उअरिआ उन्मत्ता दुःशीला च । मासल मूसल मुसल्ल । महल्लअपक्खो महालयपक्ष । चचरीओ चञ्चरीक ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ
प्रथमाध्यायस्य द्वितीय पाद ॥

---

## एत्साज्झला त्रयोदशगेऽचः ॥ १ ॥

आदेरित्यनुवर्तते । त्रयोदशादिष्वादेरच साज्झला सस्वरव्यञ्जनेन परेण सह एत्व भवति । तेरह त्रयोदश । थेरो स्थविर ब्रह्मा वा । एक्कारो अय स्कार । वेइल विचकिलम् । मुद्धविअइलप्पसूणपुञ्जा इति च दृश्यते । तेवीसा त्रयोविंशति । तेतीसा त्रयस्त्रिंशत् । इत्यादि ॥

## कदले तु ॥ २ ॥

एत्साज्झलेत्यनुवर्तते । कदले आदेरच परेण स्वरव्यञ्जनेन सह एत्व तु भवति । केल कअल । केली कअली ॥

## कर्णिकारे फो. ॥ ३ ॥

कर्णिकारे फोर्द्वितीयस्याऽच परेण साज्झला एत्व तु भवति । कण्णेरो कण्णिआरो ॥

## नवमालिकाबदरनवफलिकापूगफलपूतर ओल् ॥ ४ ॥

एष्वादेरच परेण साज्झला ओत्व भवति । लित्वान्नित्यम् । णोमालिआ नवमालिका । बोर बदरम् । णोहलिआ नवफलिका । पोफल पूगफलम् । पोरो पूतर अधमो जलज तुर्वा ॥

## तु मयूरचतुर्थचतुर्वारचतुर्दशचतुर्गुणमयूखो-लूखलसुकुमारोदूखललवणकुतूहले ॥ ५ ॥

एष्वादे स्वरस्य परेण स्वरव्यञ्जनेन सह ओत्व तु भवति । मोरो मऊरो मयूर । चोत्थो चउत्थो चतुर्थ । चोव्वारा चउव्वारो चतुर्वार । चोद्दहो चउद्दहो चतुर्दश । चोद्दही चउद्दही चतुर्दशी । चोग्गुणो चउग्गुणो चतुर्गुण । मोहो मऊहो मयूख । ओहल उलूहल उलूखलम् । सोमाला सुउमालो सुकुमार । ओहलो उऊहला उदूखल । लोण लअण लवणम् । कोहल कुऊहल कुतूहलम् । मोर सस्कृतेऽपीति केचित्, तदप्रसिद्धम् ॥

## निषण्ण उम ॥ ६ ॥

निषण्णे आदेरच परेण साज्झला उम इत्यादेशो भवति । णुमण्णो णिसण्णो ॥

## अस्तोरखोरचः ॥ ७ ॥

अधिकारोऽयम्, 'शा सलिल'ति यावत् । यदित ऊर्ध्वमनुक्रमिष्याम तदस्तोरसयुक्तस्याऽखोरनादेरच परस्य भवतीति वेदितव्यम् ॥

## प्रायो लुक् कगचजतदपयवाम् ॥ ८ ॥

असयुक्तानामनादौ वर्तमानानामच परेषा कगचजतदपयव इत्येतेषा प्रायो लुग्भवति । क—लोक लोओ । शकट सअडो । तीर्थकर तित्थअरो । ग—नगर णअर । नग णओ । मृगाङ्क मिअको । च—शची सई । कचग्रह कअ ग्गहो । रचना रअणा । ज—गज गओ । रजत रअअ । प्रजापति पआवई । भजन भअण । त—सुत सुओ । यति जई । रति रई । रसातल रसाअल । द—नदी णई । मदन मअणो । गदा गआ । कदन कअण । प—रिपु रिऊ । विपुल विउल । सुपुरुष सुउरिसो । य—जय जओ । प्रिय पिओ । वियोग

विओओ ।नयन णअण। व—लावण्य लाअण्ण। वडवानल वडआणलो। विविध विइहो। वग्रहणाद्वकारस्याऽपि। विबुधो विउहो। प्रायोग्रहणात क्वचिन्न भवति। सुकुसुम। पआगजल। सुगओ। अगरु। सचाव। विजण। सुतार। विदुरो। सपाव। समवाओ। देवो। दाणवो। अस्तोरित्येव। अङ्को। ससङ्को। सङ्गो। सङ्का। चवा। अज्जुणो। युत्तो। उद्दामो। विप्पो।सच्च। सव्वं। अक्को। सग्गो अखोरित्येव। कुल। गङ्गा। चरा। जडो। तमो। दआ। परो। वरो। अच इत्येव। सकरो। सगमो। कचण। वचणा। धणजओ। आतर। चदण। कपो। सअवरो। समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपीष्यते, तेन तत्र यथादर्शनमुभयमपि भवति। सुहकरो सुहअरो सुखकर। आअमिओ आगमिओ आगमिक। सहचरो सहअरो सहचर। आअओ आगओ आगत। जलअरो जलचरो जलचर। सुअणो सुजणो सुजन। बहुअरो बहुतरो बहुतर। वित्तअरो वित्तपरो वित्तपर। धीरअमो धीरयमो धीरयम। गणवारो गणआरो गणवार। सुहओ सुहदो शुभद सुखदो वा। इत्यादि। बहुलाधिकारात् क्वचिदादेरपि भवति। चिह्नम् इणहम्। सपुन सोउणो। नपुन णउणो। सच सोअ। क्वचिच्चस्य ज। पिशाची पिसाजी॥

## नात् प ॥ ९ ॥

आदवर्णात्परस्य प पकारस्य लुङ् न भवति। सवहो शपथ। सावो शाप। आदिति किम्? परिउट्ठो परिपुष्ट॥

## यश्रुतिर. ॥ १० ॥

आदित्यनुवर्तते। 'प्रायो लुगि'त्यादिना लुकि सति योऽवशिष्यते अवर्ण, स अवर्णात्पर लघुप्रयत्नतरयकारश्रुतिर्भवति। शकट सयढ। आकर आयरो। प्रकाश पआसो। आकाश आआसो। नगर णअर। सागर साअरो। वचन वअणं। आचार आआरो। रजत रअअ। भाजन भाअण। प्रजापति पआवई। कृत कअ। पाताल पाआल। पद पअ। गदा गआ। नादवती णाअवई। नयन नअण। जाया जाआ। लावण्यं लाअण्ण। अवर्ण इति किम्? सउणो शकुन। पउणो प्रगुण। पउर प्रचुरम्। राईव राजीवम्।

रई रति । साऊ स्वादु । वाऊ वायु । कई कपि कविर्वा । आदित्येव । विअड विकटम् । देअरो देवर । क्वचिद्भवति । पिअइ पिवति ॥

कामुकयमुनाचामुण्डाऽतिमुक्तके मोङ् लुक् ॥ ११ ॥

कामुकादिषु मकारस्य लुग्भवति । ङानुबन्धत्वाच्छेषस्य स्वरस्य सानुनासिक उच्चार । कामुक काउँओ । यमुना जउँणा । चामुण्डा चाउँण्डा । अतिमुक्तक अइउँतओ । क्वचित्-अइमुत्तअ इति च दृश्यते ॥

खोऽपुष्पकुब्जकर्पूरकीले कोः ॥ १२ ॥

'उकारेणाऽनुबन्धेन स्ववर्गा परिगृह्यन्ते'—इति व्याकरणान्तरे प्रसिद्धम् । यथा—कु कवर्ग । चु चवर्ग । एव टुतुपुषु । अपुष्पवाचिनि कुब्जशब्दे कर्पर कीलयोश्च को कवर्गस्य खो भवति । खुज्जो । पुष्पे तु बन्धुअकुज्जपसूण । खप्परो । खिलिओ ॥

छागशृङ्खलकिराते लकचा ॥ १३ ॥

कोरित्यनुवर्तते । छागशृङ्खलकिरातेषु कवर्गस्य लकच इत्येते यथासख्य भवन्ति । छाग छालो । छागी छाली । सकल शृङ्खलम् । किरात चिलाओ । पुलिन्दपर्याय एव । कामरूपिणस्तु नेष्यते—नमिमो हरकिरा अ ॥

वैकादौ गः ॥ १४ ॥

एकादिषु कोर्गकारो वा भवति । एगो । पक्षे-एक्को एओ । आगरिसो आअरिसो आकर्ष । लोगो लोओ लोक । असुगो असुओ असुक । तित्थगरो तित्थअरो तीर्थकर । उज्जोअगरो उज्जोअअरो उद्योतकर । सावगो सावओ श्रावक । अमुगो अमुओ अमुक । आगारो आआरो आकार । इत्यादि ॥

खो कन्दुकमरकतमदकले ॥ १५ ॥

एषु खोरादे कवर्गस्य गो भवति । पृथग्योगान्नित्यम् । गदुओ कन्दुक । मरगअ मरकतम् । मदगलो मदकल ॥

पुन्नागभगिनीचन्द्रिकासु म ॥ १६ ॥

एषु कोर्मो भवति । पुण्णामो । भामिणी । चंदिमा ॥

## शीकरे तु भहौ ॥ १७ ॥

शीकरे कोर्भकारहकारौ तु भवत । सीहरो सीभरो सीअरो ॥

## ऊत्वे सुभगदुर्भगे वः ॥ १८ ॥

अनयोरुत ऊत्वे सति कोर्वकारो भवति । दूहवो । सूहवो । ऊत्व इति किम् ? दुहओ । सुहओ ॥

## निकषस्फटिकचिकुरे ह ॥ १९ ॥

एषु कवर्गस्य हत्व भवति । णिहसो णीहसो । फलिहो । चिहुरो । चिहुर संस्कृतेऽपीति भृङ्गाचार्य ॥

## खघथधभाम् ॥ २० ॥

ह इति वर्तते । असयुक्तानामनादौ वर्तमानानामच परेषा खघथधभ इत्येतेषा प्रायो हकारो भवति । ख—शाखा साहा । मुख मुह । लिखति लिहइ । घ—मेघ मेहो । जघन जहण । श्लाघते सलाहइ । थ—नाथ णाहो । रथ रहो । मिथुन मिहुण । कथयति कहअइ । ध—साधु साहु । सुधा सुहा । बाधते बाहइ । भ—शुभ सुह । स्वभाव सुहावो । स्तनभर थणहरो । शोभते सोहइ । असतोरित्येव । सौख्य सोक्ख । आख्याति अक्खइ । अर्घ अग्घो । कत्थइ कथ्यते । गृद्ध गिद्धो । उद्धरइ उद्धरति । । दर्भ दब्भो । लभ्यते लब्भइ । अखोरित्येव । खगो । घटा । थणो । धण । भरो । अच इत्येव । सखो । सघो । कथा । बन्धो । रभा । प्राय इत्येव । सरिसवखलो सर्षप खल । पलअघणो प्रलयघन । अथिरो अस्थिर । जिणधम्मो जिनधर्म । पणट्ठभवो प्रणष्टभव ॥

## ध पृथकि तु ॥ २१ ॥

पृथक्शब्दे थस्य धकारो भवति तु । पुध पिध पुह पिह ॥

## चोः खचितपिशाचयो सल्लौ ॥ २२ ॥

त्वित्यनुवर्तते । खचितपिशाचयो चोश्चवर्गस्य सकारद्विरुक्तलकारौ यथासख्य तु भवत । खसिओ खइओ । पिसल्लो पिसाओ । स्त्रिया क्वचिज्जत्वमपि । पिसाजी ॥

## झो जटिले ॥ २३ ॥

चोरिति वर्तते, त्वितिच । जटिले चवर्गस्य झत्व तु भवति । झडिलो जडिलो ॥

## टोर्बडिशादौ लः ॥ २४ ॥

त्वित्यनुवर्तते । बडिशादौ टवर्गस्य लत्व तु भवति । बलिस बडिस । गुलो गुडो । णल णड । चविलो चविडो । आमेलो आमेडो । णाली णाडी । वेलू वेणू । दालिम दाडिव । पालेइ पाडेइ । बडिशगुडनडचपेटापीडनाडीवेणु दाडिमा । पाटयति-इति णिजन्त पटिधातुरिह गृह्यते ॥

## स्फटिके ॥ २५ ॥

टोरित्यनुवर्तते । स्फटिके टवर्गस्य लो भवति । पृथग्योगान्नित्यम् । फलिहो ॥

## लरङ्कोडे ॥ २६ ॥

अङ्कोडे टोर्लत्व भवति । रित्वात् द्वित्वम् । अङ्कोल्ल ॥

## ढः कैटभशकटसटे ॥ २७ ॥

कैटभशकटसटाशब्दे टोढत्व भवति । कइढवो । सअढ । सढा ॥

## ठ. ॥ २८ ॥

असयुक्तस्याऽनादौ वर्तमानस्याऽच परस्य ठकारस्य ढो भवति। मठ मढो। कमठ कमढो । शठ सढो। कुठार कुढारो । अस्तोरित्येव। चिट्ठइ । अखो रित्येव । ठाइ । अच इत्येव । कठो ॥

## पिठरे हस्तु रश्च ढः ॥ २९ ॥

ठ इति वर्तते । पिठरे ठस्य हत्व भवति तु, तत्सनियोगे रस्य च ढत्वम् । पिहढो पिढरो पिठर ॥

## लल् डोऽनुडुगे ॥ ३० ॥

अस्तोरखोरच परस्य डकारस्य लकारो भवति, अनुडुगे उडुवादीम्

वर्जयित्वा । लित्वाभित्यम् । वडवामुख बलआमुह । गरुड गरुलो । तडाक तलाअ । क्रीडति कीलइ । अस्तोरित्येव । कुड्ड कुडचम् । अखोरित्येव । डमरुओ । अच इत्येव । तोंड तुण्डम् । अनुडुग इति किम् ? उड्डु । निबिड । गउडो । नाडी । पीडिअ । नीड । इत्यादि ॥

## टो डः ॥ ३१ ॥

अस्तोरखोरच परस्य टस्य डत्व भवति । भट भडो । नट णडो । पट पडो । घट घडो । घटते घडइ । अस्तोरित्येव । खट्वाङ्ग खट्वाङ्गम् । अखोरित्येव । टङ्को देश । अच इत्येव । घण्टा । कचिन्न भवति । अटति अटइ ॥

## वेतस इति तो ॥ ३२ ॥

अत इत्यनुवर्तते । वेतसे अत इत्वे सति तोस्तवर्गस्य डो भवति । वेडिसो । इतीति किम् ? वेअसो । अत एव विधानात् स्वप्नादौ वेतसस्य अत इत्व वा भवतीति वेदितव्यम् ॥

## प्रतिगेऽप्रतीपगे ॥ ३३ ॥

तोरित्यनुवर्तते । प्रत्यादिषु तवर्गस्य डो भवति, अप्रतीपगे प्रतीपादीन् वर्जयित्वा । प्रतिपन्न पडिवण्ण । प्रतिभास पडिहासो । प्रतीहार पडिहारो । प्रतिस्पर्द्धी पडिप्पद्धी । प्रतिनिवृत्त पडिणिउत्त । प्रतिकरोति पडिकरेई । प्रतिपत् पडिवआ । प्रतिश्रुत् पडिसुआ । प्रतिमा पडिमा । प्रभृति पहुडि । मृतक मडअ । भिन्दिपाल भिंडिवालो । पताका पडाआ । प्राभृत पाहुड । विभीतक बहेडओ । व्यापृत वावडो । व्याहृत वाहिडो । कन्दरिका कण्डरिआ, औषध विशेष । हरीतकी हरडई । इत्यादि । अप्रतीपग इति किम् ? प्रतीप पईव । प्रतिज्ञा पइण्णा । सम्प्रति सपइ । प्रतिसमय पइसमअ । प्रतिसमज पइसमज । प्रतिष्ठा पइट्ठा । प्रतिस्थान पइट्ठाण । इत्यादि ॥

## दशदहो ॥ ३४ ॥

दशतिदहत्याधात्वोस्तवर्गस्य डत्व भवति । डसइ । डहइ ॥

## दम्भदरदर्भगर्दभदष्टदशनदग्धदाहदोहद-दोलादण्डकदने तु ॥ ३५ ॥

दम्भादिषु तवर्गस्य डो भवति तु । डभो दभो । डरो दरो । डब्भो दब्भो । गड्डहो गद्दहो । डट्ठो दट्ठो । डसणो दसणो । डड्ढो दड्ढो । डाहो दाहो । डोहल दोहल । डोला दोला । डडो दण्डो । कडण कदण । दरशब्दे भयार्थ वृत्तावेव । अन्यत्र दरदलिअ अर्धदलितम् । दोहदे दम्भादिसाहचर्याद्दाद्यस्यैव ॥

## तुच्छे चछौ ॥ ३६ ॥

तुच्छे तवर्गस्य चकारछकारौ तु भवत । चुच्छ छुच्छ ॥

## टल् त्रसरवृन्ततूबरतगरे ॥ ३७ ॥

एषु तवर्गस्य टकारो भवति । लित्वान्न विकल्प । टसरो । वेण्ट । ताल वेण्ट । टूबरो तूबर शृङ्गरहितोऽनड्वान्, श्मश्रुरहित पुरुषो वा, जनको वा । टगरो तगर ओषधिविशेषो वृक्षविशेषो वा ॥

## ह' कातरककुदवितस्तिमातुलिङ्गे ॥ ३८ ॥

एषु तवर्गस्य हत्व भवति । काहरो । कउह । विहत्थी । माहुलिंग ॥

## तु वसतिभरते ॥ ३९ ॥

अनयोस्तवर्गस्य हत्व वा भवति । वसही वसई । भरहो भरओ ॥

## ल पलितनितम्बकदम्बे ॥ ४० ॥

एषु तवर्गस्य लो भवति । पलिल पलिअ । णिलबो णिअंबो । कलबो कअबो ॥

## दोहदप्रदीपशातवाहनाऽतस्याम् ॥ ४१ ॥

दोहदे प्रपूर्वकदीप्यतिधातौ शातवाहने अतस्या च तवर्गस्य लत्व भवति । पृथग्योगान्नित्यम् । डोहलो। पलीवेइ। पलित्त । सालवाहणो सालाहणो । अलसी ॥

## रल् सप्तत्यादौ ॥ ४२ ॥

सप्तत्यादौ तवर्गस्य रत्व भवति । लित्वान्नित्यम् । सप्तति सत्तरी । सप्त दश सत्तरह । एकादश एआरह । द्वादश बारह । त्रयोदश तेरह । पञ्चदश पण्णरह । अष्टादश अट्ठारह । गग्गर गद्गदम् । इत्यादि ॥

## अद्रुमे कदल्याम् ॥ ४३ ॥

अद्रुमवाचिनि कदलीशब्दे तो रत्व भवति । करली । अद्रुम इति किम् ? कअली केली ॥

## कदर्थिते खोर्वः ॥ ४४ ॥

कदर्थिते खोरादेस्तवर्गस्य वत्व भवति । कवट्ठिओ ॥

## पीते ले वा ॥ ४५ ॥

व इत्यनुवर्तते । पीते स्वार्थिकलकारे सति तोर्वकारो भवति । पीवलो पीअलो । ल इति किम् ? पीओ ॥

## डो दीपि ॥ ४६ ॥

दीप्यतौ धातौ तवर्गस्य डकारो वा भवति । डिप्पइ दिप्पइ ॥

## ढ पृथिव्योषधिनिशीथे ॥ ४७ ॥

एषु तवर्गस्य ढो वा भवति । पुढवी पुहवी । ओसढी ओसही । णिसीढो णिसीहो ॥

## प्रथमशिथिलमेथिशिथिरनिषधेषु ॥ ४८ ॥

ढ इति वर्तते । प्रथमादिषु तोर्ढत्व भवति । पृथग्योगान्नित्यम् । पढम पुढम । सिढिल । मेढी । सिढिरो । णिसढो ॥

## णर्दिना रुदिते ॥ ४९ ॥

रुदिते तवर्गस्य दि-इत्यवयवेन सह णत्व भवति । रित्वाद् द्वित्वम् । रुण्ण । अत्र केचित् ऋत्वादिषु तो द इत्यारब्धवन्त, तत् शौरसेनीमागधीविषय एव दृश्यत इति नोच्यते । प्राकृते तु-ऋतु उऊ । रजत रअअ । एतत् एअ । गत गओ । आगत आगओ । साम्प्रत सपअ । यत जओ । तत तओ । कृत कअ । हृत हअ । हताश हआसो । श्रुत सुओ । सुकृति सुकिई । निर्वृत णिव्वुओ । तात ताओ । कातर काअरा । कतर कअरो । द्वितीय बीओ । इत्यादय प्रयोगा बहव सन्ति । क्वचित् सभवेऽपि तद्व्यत्ययश्चेति सिद्धम् ॥

## णो वाऽतिमुक्तके ॥ ५० ॥

अतिमुक्तके तवर्गस्य णत्व वा भवति । अणिउत्तअं अईउत्तअं अणिउँत्तअं अइउँत्तअं अइमुत्तअं ॥

## गर्भिते ॥ ५१ ॥

ण इत्यनुवर्तते । गर्भिते तवर्गस्य णत्व भवति । पृथग्योगान्नित्यम् । गब्भिणो ॥

## नः ॥ ५२ ॥

अस्तोरखोरच परस्य नकारस्य णकारो भवति । कनक कणअं । धन धणं । माणेइति मानयति ॥

## आदेस्तु ॥ ५३ ॥

न इत्यनुवर्तते । शब्दानामादेर्नकारस्य णत्व भवति तु । नदी णई नई । नयति णेइ नेइ । अस्तोरित्येव । न्याय नाओ ॥

## नापिते ण्हः ॥ ५४ ॥

नापिते नकारस्य ण्ह इत्ययमादेशस्तु भवति । ण्हाविओ णाविओ नाविओ ॥

## पो व ॥ ५५ ॥

असयुक्तस्याऽनादौ वर्तमानस्याऽच परस्य पकारस्य वकार स्यात् प्राय । शपथ सवहो । शाप सावो । उपसर्ग उवसग्गो । प्रदीप पईवो । पापं पाव । उपमा उवमा । कपिल कविलो । कुणपं कुणव । कलाप कलावो । कपालं कवाल । महीपाल महीवालो । नरपति नरवई । गोपायति गोवाअइ । तपति तवइ । अस्तारित्येव । विप्र विप्पो । अखोरित्येव । पटइ पतति । पढइ पठति । अच इत्येव । कपइ कम्पते । प्राय इत्येव । कवि कई । रिपु रिऊ । एतेन प्रकारेण पकारस्य प्राप्तयोर्लोपवकारयोर्यस्मिन् कृते श्रुतिसुखमुत्पद्यते स तत्र विधेय ॥

## फ पाटिपरिघपरिखापरुषपनसपारिभद्रेषु ॥ ५६ ॥

पइत्यनुवर्तते । णिजन्ते पटिधातौ परिघादिषु च परस्य फत्व भवति । पाटयति फालेइ फाडेइ । परिघ फलिहो । परिखा फलिहा । परुष फरुसो । पनस फणसो । फनस संस्कृतेऽपीति केचित् । पारिभद्रः फालिहद्दो ॥

## नीपापीडे मो वा ॥ ५७ ॥

नीपे आपीडे च पस्य मा वा भवति । नीमो नीवो । आमेडो आवेडो ॥

## रल् पापर्द्धौ ॥ ५८ ॥

पापर्द्धौ पस्य रो भवति । लित्वान्नित्यम् । पारद्धी । पापर्द्धिर्मृगया ॥

## प्रभूते व ॥ ५९ ॥

प्रभूते पस्य वो भवति । वहुत्त ॥

## फस्य भहौ वा ॥ ६० ॥

अस्तोरखोरच परस्य फकारस्य भकारहकारौ यथादर्शनं व्यवस्थित विभाषाया भवत । क्वचित् भ –रेफ रेभो । शिफा सिभा । क्वचित्तु ह् –मोत्ता हल मुक्ताफलम् । क्वचिदुभावपि–सफल सहल सभल । शेफालिका सेहालिआ सेभालिआ । शफरी सहरी सभरी । गुहइ गुभइ गुम्फति । अस्तोरित्येव । गुप्फ गुल्फम् । पुप्फ पुष्पम् । अखोरित्यव । फणी । अच इत्येव । गुम्फइ । प्राय इत्येव । कसणफणी कृष्णफणी ॥

## बो वः ॥ ६१ ॥

अस्तोरखारच परस्य बकारस्य वो भवति । शबल सवलो । अलाबु अलावू ॥

## ङ्वयौ कबन्धे ॥ ६२ ॥

कबन्धे बस्य वकारयकारौ भवत । ङित्वात्सानुनासिक उच्चारो वकारस्य । कबन्ध कवँधो कयंधो ॥

## बिसिन्या भः ॥ ६३ ॥

बिसिनीशब्दे बस्य भो भवति । भिसिणी ॥

## वो भस्य कैटभे ॥ ६४ ॥

कैटभे भस्य वो भवति । कइढवो ॥

## त्वभिमन्यौ म ॥ ६५ ॥

व इत्यनुवर्तते । अभिमन्यौ मस्य वो भवति तु । अहिवण्णू अहिमण्णू ॥

## मन्मथे ॥ ६६ ॥

म इत्यनुवर्तते । मन्मथे आदेर्मस्य वो भवति । पृथग्योगान्नित्यम् । वम्महो ॥

## तु डो विषमे ॥ ६७ ॥

विषमशब्दे मस्य डो भवति । विसडो विसमो ॥

## यो जर् तीयाऽनीयोत्तरीयकृत्येषु ॥ ६८ ॥

त्वित्यनुवर्तते । तीये अनीये च प्रत्यये उत्तरीयशब्दे कृद्विहितप्रत्यये च यकारस्य जकारो भवति । रित्वाद् द्वित्वम् । तीये-द्वितीय विइज्जो विइओ । तृतीय तइज्जो तइओ । अनीये करणिज्ज करणीअ करणीयम् । विह्मअणिज्ज विह्मअणीअ विस्मयनीयम् । जावणिज्ज जावणीअ यापनीयम् । उत्तरिज्ज उत्तरीअ उत्तरीयम् । कृत्ये-पेज्जा पेआ पेया । मेज्ज मेअ मेयम् ॥

## इन् मयटि ॥ ६९ ॥

य इत्यनुवर्तते । मयट्प्रत्यये यस्य इकारो भवति तु । विषमय विसमइओ विसमओ ॥

## छायाया होऽकान्तौ ॥ ७० ॥

अकान्तौ वर्तमाने छायाशब्दे यस्य हत्व भवति । वच्छस्स छाहा । वच्छस्स छाआ । पुद्गलपर्यायः । सच्छाह सच्छाअ । अकान्ताविति किम् ? मुहच्छाआ । मुखकान्तिरित्यर्थ ॥

## यष्ट्या लल् ॥ ७१ ॥

यष्ट्या यस्य लत्व भवति । लट्ठी । वेणुलट्ठी । चूअलट्ठी चूतयष्टि । महुलट्ठी मधुयष्टि ॥

## कतिपये वहशौ ॥ ७२ ॥

कतिपये यस्य वत्वहत्वे भवत । हत्वे शित्वात्पूर्वस्य दीर्घ । कइअव कइवाह ॥

## अर्थपरे तो युष्मदि ॥ ७३ ॥

य इत्यनुवर्तते । अर्थपरे युष्मच्छब्दे यस्य तकारो भवति । तुह्मेच्चिअ । यूयमेव । तुह्मच्चिअ यौष्माकम् । तुह्मकेरो युष्मदीय । अर्थपर इति किम् ? जुह्मदह्मप्पअरण युष्मदस्मत्प्रकरणम् ॥

## आदेर्जः ॥ ७४ ॥

पदादेर्यस्य जो भवति । यश जसो । यम जमो । युवति जुवई । याति जाइ । आदेरिति किम् ? आमओ । अवअवो । विणओ । बहुलाधिकारात् सोपसर्गस्याऽनादेरपि । सजोओ सयोग । सजमो सयम । अपजसो अप यश । क्वचिन्न भवति । प्रयोग पओओ ॥

## भ्यौ बृहस्पतौ तु बहोः ॥ ७५ ॥

बृहस्पतौ बकारहकारयोर्यथासख्य भकारयकारौ तु भवत । भयप्पई बहप्पई ॥

## रो डा पर्याणे ॥ ७६ ॥

पर्याणे रेफस्य डा इत्ययमादेशो भवति । पडाआण पल्लाण ॥

## लो जठरवठरनिष्ठुरे ॥ ७७ ॥

र इति वर्तते । जठरादौ रस्य लत्व भवति । जठर जढल जढर । बठर वढलो वढरो । णिट्ठुलो निट्ठुरो निष्ठुर । भसलशब्दो भ्रमरपर्याय सस्कृत इव ॥

## हरिद्रादौ ॥ ७८ ॥

हरिद्रादिषु रस्य लत्व भवति । पृथग्योगान्नित्यम् । हलद्दी हरिद्रा । इङ्गालो अङ्गार । चलणो चरण । जुहुट्ठिलो युधिष्ठिर । सउमालो सुकुमार । सिढिलो शिथिर । सक्कालो सत्कार । मुहलो मुखर । वलुणो वरुण । चिलाओ किरात । लुग्गो रुग्ण । सपद्दाल सम्पद्द्वारम् । अवद्दाल अपद्वारम् । कलुणो करुण । दलिद्दो दरिद्र । फलिहो परिघ । फलिहा परिखा । दलिद्दाइ दरिद्राति । मच्छलो मत्सर । सवच्छलो संवत्सर । फालिहद्दो पारिभद्र । दालिद्द दारिद्र्यम् । काहलो कातर । इत्यादि । बहुलाधिकारादङ्गारस्य कृतेत्वस्यैव । अ यत्र अङ्गारो । चरणस्य श्लोकपादार्थवृत्तेरेव । अन्यत्र—चरणप्पहरण । किरातस्य चकारसनियोग एव । अ यत्र—णमिमो हरकिरात्र ॥

## किरिवेरे डः ॥ ७९ ॥

अनयो रेफस्य डो भवति । किडी किरि, वराहो, गवों, मूषिको, गन्धर्वो वा । वेडो वेर, भीरु शरभ, करभो, मण्डूको, दुन्दुभिर्वा ॥

खो करवीरे णः ॥ ८० ॥

करवीरे खोरादे रेफस्य णत्व भवति । कणवीरो ॥

लो ललाटे च ॥ ८१ ॥

ण इति वर्तते । ललाटे आदेर्लकारस्य णो भवति । चकार खोरित्यनु वृत्त्यर्थं । णिडाल णडाल ॥

लाहललाङ्गललाङ्गूले वा ॥ ८२ ॥

एष्वादेर्लकारस्य णो वा भवति । णोहलो लोहलो । लोहल (१)शफर विशेष । णगल लगल । णगुल लगुल ॥

स्थूले रलूतश्चौत् ॥ ८३ ॥

स्थूले लस्य रत्व लिद्भवति, तत्सन्नियोगेन ऊत ओत्व च भवति । थोरो । थूलहलद्दो इति तु स्थूलशब्दे हरिद्रादिलत्वे भविष्यति ॥

बो मः शबरे ॥ ८४ ॥

शबरे बस्य मो भवति । समरो ॥

नीवीस्वप्ने वा ॥ ८५ ॥

अनयोर्वस्य मो वा भवति । नीमी नीवी । सिमिणो सिविणो ॥

हस्य घो बिन्दोः ॥ ८६ ॥

बिन्दो परस्य हस्य घत्व वा भवति । सघारो सहारो सहार । सिंघो सिंघो सिंह । क्वचिदबिन्दोरपि । दाघो दाह ॥

शोः सल् ॥ ८७ ॥

'अस्तोरखोरच' इति निवृत्तम् । शो शषसाना सकारो भवति । लित्वा न्नित्यम् । शब्द सद्दो । कुश कुसो । नृशस णिससो । वश वसो । अश्व आसो । श्वश्रू ससू । श्यामा सामा । दशा दसा । शोभते सोहइ । षण्ड सडो । निकष णिहसो । कषाय कसाओ । विष्वक् वीसु । वर्षा वासा । तुष्यति तूसइ । शेष सेसो ॥

प्रत्यूषदिवसदशपाषाणे तु हः ॥ ८८ ॥

---

( १ ) शब्दविशेष इति ख० पु० पाठः ।

शोरित्यनुवर्तते । प्रत्यूषादिषु शषसाना ह्त्व भवति तु । पच्चूहो पच्चूसो । दिअहो दिअसो । दह दस । दहमुहो दसमुहो । दहवलो दसवलो । दहरहो दसरहो । एआरह । तेरह । पाहाणो पासाणो ॥

## स्नुषाया ण्ह फोः ॥ ८९ ॥

स्नुषाशब्दे फोर्द्वितीयस्य शो ण्ह इत्यादेशस्तु भवति । सुण्हा सुसा स्नुषा ॥

## छल् षट्शमीसुधाशाव(१)सप्तपर्णे ॥ ९० ॥

एषु शषसाना छत्व लिद्भवति । छट्ठी षष्ठी । छप्पओ षट्पद । छम्मुहो षण्मुख । छमी शमी । छुहा सुधा । छावो शाव । छत्तिवण्णो सप्तपर्ण ॥

## सिराया वा ॥ ९१ ॥

सिराशब्दे शोश्छो वा भवति । छिरा सिरा ।

## लुक् पादपीठपादपतनदुर्गादेव्युदुम्बरे-ऽचाऽन्तर्दः ॥ ९२ ॥

पादपीठादिषु अन्तर्वर्तमानस्य दकारस्य अचा सहितस्य लुग्वा भवति । पावीढ पाअवीढ पादपीठम् । पावडण पाअवडण पादपतनम् । दुग्गाई दुग्गा देई । उम्बरो उउम्बरो उदुम्बर । अन्तरिति किम्? दुर्गादेव्या आदौ मा भूत् ॥

## व्याकरणप्राकारागते कगोः ॥ ९३ ॥

लुगित्यनुवर्तते । वेति वर्तते, अचेति च । व्याकरणादिषु ककारगकारयो-रचा सह लुग्वा भवति । वारण वाअरण । पारो पाआरो । आओ आअओ ॥

## एवमेवदेवकुलप्रावारकयावज्जीविताऽवटाऽऽवर्तमान-तावति वः ॥ ९४ ॥

एवमेवादिष्वन्तर्वर्तमानस्य वकारस्य अचा सहितस्य लुग्वा भवति । एमेअ एव्वएव्व । देउल देवउल । पारओ पावारओ । जा जाव । जीअ जीविअ । अडो अवडो । अत्तमाण आवत्तमाण । ता ताव । अन्तरित्येव । एवमेवेत्यन्त्यस्य मा भूत् ॥

---

(१) शाप०—इति क० पु० पाठ ।

## ज्योर्दनुजवधराजकुलभोजनकालायस— किसलयहृदयेषु ॥ ९५ ॥

दनुजवधादिषु ज्योर्जकारयकारयोरचा सहितयोर्लुग्वा भवति। दणुवहो दणुअवहो दनुजवध । राउल राअउल राजकुलम् । भाण भाअण भाजनम् । कालास कालाअस कालायसम् । किसल किसलअ किसलयम् । हिअ हिअअ हृदयम् । महासुसमा सहिआ ममासुसमा सहृदया ॥

## अपतौ घरो गृहस्य ॥ ९६ ॥

गृहस्य घर इत्यादेशो भवति, पतिशब्द परो न चेत् । घरो गृहम् । घर सामी गृहस्वामी । राअघर राजगृहम् । अपताविति किम् ? गहवई गृहपति ॥

## स्त्रीभगिनीदुहितृवनितानामित्थीबहिणी- दूआविलआः ॥ ९७ ॥

स्त्रीप्रभृतीनामित्थीप्रभृतय आदेशा यथासख्य वा भवन्ति । इत्थी थी स्त्री । बहिणी भइणी भगिनी । दूआ ~~दुहिआ~~ दुहिता । विलआ वणिआ वनिता । विलआशब्द सस्कृतेऽपीति केचित् ॥

## उभयाधसोरवहहेट्ठौ ॥ ९८ ॥

उभय अधस् इत्येतयोर्यथासख्यम् अवह हेट्ठ इत्यादेशौ वा भवत । अवह उहअ । उवह–इत्यपि केचित् । हेट्ठ अह । हेट्ठमग्गो अहमग्गो अधोमार्ग ॥

## मलिनधृतिपूर्ववैडूर्याणा मइलदिहीपूरिम– वेरुलिआः ॥ ९९ ॥

मलिनादिना मइलादय आदेशा यथासख्य वा भवन्ति । मलिन मइल मलिण । धृति दिही धिई । पूरिम पुव्व पूर्वम् । वेरुलिअं वेडुज्ज वैडूर्यम् ॥

## स्मरकट्वोरीसरकारौ ॥ १०० ॥

स्मरकटुशब्दयोरीसरकारौ यथासख्य वा भवत । ईसरो सरो स्मर । कार कडु कटु ॥

## बाहिंबाहिरौ बहिष ॥ १०१ ॥

बहि शब्दस्य बाहिं बाहिर इत्यादेशौ वा भवत । बाहिं बहिर । बाहिर ब्भतरकिरिआरोहो बाह्याभ्यन्तरक्रियारोध ॥

## कूरो गौणेषदः ॥ १०२ ॥

ईषच्छब्दस्य गौणस्य कूर इत्यादेशो वा भवति । चिंचव्व कूरपक्का चिञ्चे वेषत्पक्का । पक्षे ईसि ॥

## एण्हि एत्ताहे इदानीम. ॥ १०३ ॥

इदानीमित्यस्य एण्हि एत्ताहे इत्यादेशौ वा भवत । एण्हि एत्ताहे इआणीं पक्षे दाणिं ॥

## तिर्यक्पदातिशुक्तेस्तिरच्छिपाइक्कसिप्पि ॥ १०४ ॥

तिर्यगादेस्तिरिच्छादिरादेशो भवति । तिरच्छि पेच्छइ तिर्यक्पश्यति । पदाति पाइक्को पआई । शुक्ति सिप्पि सुत्ती ॥

## गोणाद्या ॥ १०५ ॥

गोणादय शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमवर्णविकारा बहुल निपात्यन्ते। गोणो गौ । स्वार्थे ण । गोला गोदा, गोदेति गोदावरी। दस्य ल । गोला सस्कृतेऽपीति केचित् । ओसाअण आपोशनम् । आपो इत्यस्य ओसा इत्यादेश , तत शकारात् परो यकारागम । ओसाशब्दो नीहारवाची देश्य , तत्कणो वा। ओसा अअण। वणाई वनराजि। रेफस्य लुक् । तल्लड तल्ल तल्पम्। लद्वित्वपलोपौ स्वार्थे डो वा। द्वित्वाभावे तल । थोवो थेवो थोक्को स्तोक । कस्य वत्वम् , ओत एत्व च वा, सेवादिपाठाद् द्वित्वम् । विरुअ विरुद्धम्। सयुक्तस्य लुक्। आओ आपः। शरदादिपाठादन्त्यस्य हलोऽत्व दीर्घश्च। गोसो गोस्पर्श , गोसर्ग प्रत्यूष । सस्य लुक्। वोसिरण व्युत्सर्जनम्। व्युदोवो, सृजतीति जस्य र, सस्य अत इत्व च। धिरत्थु धिगस्तु । गस्य र । पथ्थेवात्र पाथेयम्। थो द्वित्वं वाकारागमश्च। वेलवो वडवो विडम्बना। इत एत्, डो ल, नकारस्य लुक् च। बुलुबुलो बुद्बुद । दकारयोर्ल, संयुक्तयोर्मध्ये उत्वम्। किरल्ल करीरम्। रस्य ल्ल । ऊआ यूका। यो लुक्। दोग्ग युग्मम्। योर्दो। धणिआ धन्या प्रियतमा। यकारात्पूर्वमित्वम्। णिव्व

हूण उद्वहन विवाह । वकारस्य णि । मुव्वहइ उद्वहति । उकारस्य मु । धिक् २
छि छि । धस्य छ । वाडी वृत्ति । ऋत आत्व, तकारस्य डत्वम् । गहिल्लो
ग्रहिल । लो द्वित्वम् । गोणिक्को गोनीक , गवामनीक गवा समूह । को द्वित्वम् ।
अइरजुवई अचिरयुवति । अपूर्वेत्यर्थ । अणरहू नववधू । नकारवकारयोरत्व
णत्वे वस्य च र । अमआ असुरा । सुकाररेफयोर्मयौ । पण्णवण्णा पञ्चावणणा
पञ्चपञ्चाशत् । स्तोरादेर्णं , पस्य व , चाशतोर्णं । द्वितीयस्याऽत आ,
चाशतोर्णं । गामहण ग्रामस्थानम् । स्थकारस्य ह । तेवण्णा त्रिपञ्चाशत् । इत
एत्व, चाशतार्णं । घुसिम घुसृणम् । णो म , ऋकारस्य इत्वम् । छट्टा छटा ।
टकारस्य ट्ट । बइल्लो बलीवर्द । दोर्लं , लीवयोरित्वम् । पाउरण पार्वरण
प्रावरणम् । द्वितीयस्यात उ , वस्य गुरादेशौ । लक्कुडो लगुड । गकारस्य क्क ।
आसघो आस्था । स्थकारस्य सघ । छेणो स्तेन । स्तो छ । दोसिणी ज्योत्स्ना ।
ज्योर्दौ, नात्पूर्वमित्वम् । हिज्जा ह्यः । ज्ज ह्यकारस्य । कक्खडो कर्कश ।
कशो खडौ । तेआलिसा त्रिचत्वारिंशत् । इत ए, चत्वयो आ, रो ल , विंश
त्यादिपाठाद् वि दोर्लुक् । कत्त कलत्रम् । लस्य साचो लुक् । कलबू अलावू ।
अकारस्य क , आकारस्य अ । नलिश्र निहेलण निलय । इदतोऽर्थत्यय , यो
ण , लात्पूर्वं हे । णिक्कडो निश्चय । श्चयो कडौ । णिक्कडो निश्चल । चलो
कडौ । णिरासो नृशंस । शकारस्य रा । णिप्फसो निस्त्रिंश । स्त्रिकारस्य फ ।
विहुडुडुओ विधुन्तुद । तो ड । वहिओ मथित । मो व । खड्ड खेलम् । लो
ड्ड । कोलिर कुरुविन्द पद्मरागविशेष । उकारयोरोदितौ, रो ल , वि न्दोश्च
र । विसग्गो व्युत्सर्ग । व्युदो वि । सत्रअण सहननम् । हस्य घ , आदेर्नो य ।
घाअणो गायन । गो घ । ढेक्कुणो मत्कुण । मतो ढे । ककुड ककुदम् । दो ड ।
सेवाल जम्बालम् । जमो से । कुड्डओ चुल्लक । लो ड । वड्डुअरो बृहत्तर ।
बृहदित्यस्य वड्डु । अत्थक अकाण्डम् । काण्डयो त्थकौ । आणुअ आननम् ।
आदेरत उ , द्वितीयस्य नो लुक् । सगोल सघात । घातयोर्गोल । सामरी
शामली शाल्मलि । लो लुक्, द्वित्वाभावश्च । हिमोर हिमोदरम् । दो लुक् ।
अब्बा अम्बा । बिन्दोर्लुक् बो द्वित्व च । सिप्पी सूची । ऊत इ , चस्य द्विरुक्त
फ । वड्डी वाणी । णो ड्ड । जच्छन्दो स्वच्छन्द । स्वस्य ज । तलरो तलवर ,
पुराध्यक्ष । वस्य साचो लुक् । कुट्ट कुतुकम् । तोर्लुक्, को द्विरुक्तट्ट । सीसक्कं

शिर पत्रम् । पत्रस्य क । जम्बाल शैवालम् । शै इत्यस्य ज । अणुदिव दिन मुखम् । अनु पश्चात्, दिवा दिनम् । नो व । सत्थरो सस्तर । बिन्दो लुक् । विट्टिर विस्तार । स्तकारस्य ट्टि । विली वीचि विबी च । चो ल, चो ब । डाभिओ दाम्भिक । दो ड । कडप्पो कलाप समूह । लो ड, पो द्वित्व च । दूसलो दुर्भग । भगो सलो । गल्ल गड । डो ल्ल । पडि सिद्धी प्रतिस्पर्धा । स्पस्य सि, आत ई । वढो वट । टो ढ । डोअणो डोअलो डोलो लोचनम् । लो ड, लनोर्डलौ, अत्रैव चस्य साचो लुक् । कत्थइ कचित् । चेर्थ । डेड्डुरो दर्दुर । अत ए, दकारयोर्ड । छिल्ल छिद्रम् । द्रो ल । मजरो वजरो मार्जार । मो बो वा, वक्रादिपाठादनुस्वार, आतो ह्रस्व । गद्दरो गृध्र । रात्पूर्वमत् । उरओ अज्जमो ऋजु । जो र । ऋकारोकारयोरत्, स्वार्थे मश्च । शारिका साइआ सारिआ । रेर्लुक्, अन्त्यस्य आत इआ । अरणी सरणि । सो लुक् । तणसी तृणराशि । राकारस्य पूर्वेणाऽचा सह एत्वम् । दुग्ग दु खम् । स्तोर्ग । चउक्क चतुष्पथम् । पथस्य क्क । कलेरं करालम् । रलयोर्व्यत्यय, अत एत्व च । कक्काल इत्यादि ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ प्रथमाध्यायस्य तृतीय पाद ॥

---

## स्तो ॥ १ ॥

अधिकारोऽयम्, 'ईल् ज्याया'मिति यावत्, यदित ऊर्ध्वमनुक्रमिष्यते तत् स्तो सयुक्तस्य भवतीति वेदितव्यम् ॥

## वा रक्ते गः ॥ २ ॥

रक्ते स्तो संयुक्तस्य ग इत्यादेशो वा भवति । रग्गा रत्तो ॥

## शुल्के(१) ङ्गः ॥ ३ ॥

शुल्के सयुक्तस्य ङ्ग इत्यादेशो वा भवति । सुङ्ग सुक्क ॥

## क शक्तमुक्तदष्टमृदुत्वरुग्णेषु ॥ ४ ॥

---

( १ ) शुल्के—इति क० पु० पाठ ।

एषु स्तो ककारो वा भवति। सक्को सत्तो। मुक्को मुत्तो। दक्को दट्ठो। माउक्क माउत्तण। लुक्को लुग्गो॥

## क्ष्वेडकगे खल् ॥ ५ ॥

क्ष्वेडकादिषु सयुक्तस्य खकारो भवति। लित्वान्नित्यम्। क्ष्वेडक खेडओ। क्ष्वेडको विषपर्याय। स्फोटक खोडओ। स्फोटिका खोडिआ॥

## ष्कस्कोर्नाम्नि ॥ ६ ॥

ख इत्यनुवर्तते। ष्क स्क इत्येतयोर्नाम्नि सज्ञाया खो भवति। पुष्कर पोक्खर। पुष्करिणी पोक्खरिणी। निष्क णिक्क। स्कन्ध कधो। स्कन्धावार खधावारो। अवस्कन्द अवक्खंदो। नाम्नीति किम्? दुक्करं दुष्करम्। णिक्कम्प निष्कम्प। णमोक्कारो नमस्कार। सक्कअ सस्कृतम्। सक्कारो सस्कार॥

## वृक्ष रुर्वृक्षे ॥ ७ ॥

वृक्षशब्दे सयुक्तस्य खो भवति, तत्संनियोगेन वृकारस्य च रुकार। रुक्खो। स्पृहादित्वाच्छत्वे वच्छो॥

## क्षः ॥ ८ ॥

क्षस्य खो भवति। लक्षण लक्खण। क्षय खओ। विचक्षण विअक्खणो। बहुलाधिकारात् कचिच्छझावपि। क्षीण झीण क्षीणम्। क्षीयते छिज्जइ झिज्जइ॥

## स्थाणावहरे ॥ ९ ॥

स्थाणुशब्दे स्तो खो भवति, अहरे हरश्चेद्वाच्यो न भवति। खाणू। अहर इति किम्? थाणू॥

## स्कन्दतीक्ष्णशुष्के तु खोः ॥ १० ॥

एषु खोरादे संयुक्तस्य खो भवति तु। खन्दो कन्दो। तिक्ख तिण्ह। सुक्खं सुक्का॥

## स्तम्भे ॥ ११ ॥

खोरित्यनुवर्तते, त्विति च। स्तम्भे खो सयुक्तस्य खकारो भवति तु। खम्भो थम्भो॥

## थलस्पन्दे ॥ १२ ॥

स्पन्दाभाववृत्तौ स्तम्भे आदे संयुक्तस्य थो लिङ्गवति । थभो । थभिज्जइ ॥

## स्त्यानचतुर्थे च तु ठः ॥ १३ ॥

स्त्यानचतुर्थयोश्चकारादस्पन्दवृत्तौ स्तम्भे च ठत्व भवति तु । ठीण थीण । चउट्ठो चउत्थो । ठभो । ठभिज्जइ ॥

## ष्ट ॥ १४ ॥

ठ इत्यनुवर्तते । ष्टस्य ठो भवति । योगविभागान्नित्यम् । दृष्टि दिट्ठी । मुष्टि मुट्ठी । यष्टि लट्ठी । सौराष्ट्र सोरट्ठ ॥

## विसस्थुलास्थ्यधनार्थे ॥ १५ ॥

विसंस्थुलास्थिशब्दयोरधनवाचिन्यर्थशब्दे च संयुक्तस्य ठो भवति । विसठुल विसस्थुलम् । अट्ठी अस्थि । अट्ठो अर्थ प्रयोजनम् । अधन इति किम् ? अत्थो ॥

## चः कृत्तिचत्वरे ॥ १६ ॥

कृत्तिचत्वरयो संयुक्तस्य चो भवति । किची कृत्ति । चच्चर चत्वरम् ॥

## त्योऽचैत्ये ॥ १७ ॥

चैत्यवर्जितस्य त्यस्य चो भवति । सत्य सच्च । प्रत्यय पच्चओ । अमात्य अमच्चो । अचैत्य इति किम् ? चइत्त ॥

## श्चेर्वृश्चिके ञ्चुर्वा ॥ १८ ॥

वृश्चिके श्चि इत्यस्य ञ्चु इत्ययमादेशो भवति । विञ्चुओ विच्छुओ ॥

## उत्सवर्क्षोत्सुकसामर्थ्ये छो वा ॥ १९ ॥

एषु स्तो छो वा भवति । पुनर्वाग्रहणादुत्तरत्र न विकल्प । उच्छओ ऊसओ । रिच्छो रिक्खो । उच्छुओ ऊसुओ । सामच्छ सामत्थ ॥

## क्षमाया कौ ॥ २० ॥

छ इत्यनुवर्तते । कौ पृथिव्या वर्तमाने क्षमाशब्दे स्तो छत्व भवति । छमा । (१)लाक्षणिकस्यापि छमा । काविति किम् ? खमा क्षान्ति ॥

---

(१) क्षमाशब्दनिष्पन्नस्येत्यथ ।

## क्षण उत्सवे ॥ २१ ॥

उत्सववाचिनि क्षणशब्दे संयुक्तस्य छो भवति। छणो। उत्सव इति किम्? खणो॥

## स्पृहादौ ॥ २२ ॥

स्पृहादिषु स्तो छो भवति। छिहा स्पृहा। क्षुर छुरो। क्षीर छीर। वृक्ष वच्छो। क्षेत्र छेत्र। कुक्षि कुच्छी। क्षुत छुअ। क्षुण्ण छुण्ण। कक्षा कच्छा। कक्ष कच्छो। मक्षिका मच्छिआ। क्षार छार। इक्षु इच्छू। सदृक्ष सरिच्छो। अक्षि अच्छी। स्थगित छइओ। दक्ष दच्छो। कौक्षेयक कुच्छेअअ। उक्षा उच्छा। सादृश्य सारिच्छं। क्षुधा छुहा। लक्ष्मी लच्छी। लक्ष्म लच्छं। इत्यादि॥

## थ्यश्चत्सप्सामनिश्चले ॥ २३ ॥

निश्चलवर्जिते थ्यश्चत्सप्स इत्येतेषां छो भवति। थ्य-पथ्य पच्छो। मिथ्या मिच्छा। श्च-पश्चिम पच्छिम। आश्चर्यम् अच्छेर। पश्चात् पच्छा। त्स-उत्साह उच्छाहो। मत्सर मच्छरो। संवत्सर संवच्छलो। चिकित्सति चिइच्छइ। प्स-अप्सरस अच्छरा। लिप्सते लिच्छइ। जुगुप्सति जुउच्छइ। अनिश्चल इति किम्? णिच्चलो॥

## द्यय्यर्यां जः ॥ २४ ॥

एषां जकारो भवति। द्य-मद्य मज्ज। अवद्यम् अवज्ज। आतोद्यम् आतोज्ज। द्युति जुई। द्योत जोओ। य्य-शय्या सेज्जा। जय्य जज्जो। खय्य खज्जो। र्य-जर्य जज्जो। कार्य कज्ज। पर्याय पज्जाओ। पर्याप्त पज्जत्त॥

## त्वभिमन्यौ जञौ ॥ २५ ॥

अभिमन्यौ स्तो जञ् ज इत्येतौ तु भवत। अहिमञ्जू अहिमजू अहिवण्णू अहिमण्णू॥

## ध्यह्योर्झल् ॥ २६ ॥

ध्य ह्य इत्येतयोर्झत्वं भवति। लित्वान्नित्यम्। ध्य-ध्यान झाण। अध्ययनम् अज्झअण। सन्ध्या संझा। विन्ध्य विंझो। उपाध्याय उवज्झाओ। ह्य-सह्य सज्झो। गुह्य-गुज्झ। गाह्य गेज्झ। नह्यते णज्झइ॥

## साध्वसे ॥ २७ ॥

साध्वसे स्तोर्झो भवति । सज्झस ॥

## ध्वजे वा ॥ २८ ॥

ध्वजे स्तोर्झो वा भवति । झओ धओ ध्वज ॥

## इन्धौ ॥ २९ ॥

इन्धी दीप्तावित्यस्मिन् धातौ स्तोर्झ इत्यादेशो भवति । समिज्झइ समिध्यति । विज्झइ विध्यते ॥

## र्तस्याऽधूर्तादौ ट ॥ ३० ॥

र्तस्य टो भवति, अधूर्तादौ धूर्तादीन् वर्जयित्वा । केवट्टो कैवर्त । वट्टी वर्ति । वट्टुल वर्तुलम् । सवट्टिओ सवर्तित । पअट्टइ प्रवर्तते । णट्टइ नर्तयति । अधूर्तादाविति किम् ? धुत्तो धूर्त । वत्ता वार्ता । अत्ती आर्ति । सवत्तण सवर्तनम् । विवत्तण विवर्तनम् । पवत्तण प्रवर्तनम् । आवत्तण आवर्तनम् । मुहुत्तो मुहूर्त । मुत्तो मूर्त । आवत्तओ आवर्तक । सवत्तओ सवर्तक । वत्तिओ वार्तिक । वत्तिआ वर्तिका । पवत्तओ प्रवर्तक । मुत्ती मूर्ति । उक्कित्तिओ उत्कीर्तित । णिवत्तओ निवर्तक । णिव्वत्तिओ निर्वर्तक ॥ कित्ती कीर्ति । कत्तिओ कार्तिक । बहुलाधिकारात्–वट्टा वार्ता ॥

## प्रवृत्तसन्दष्टमृत्तिवृत्तेष्टापत्तनकदर्थितोष्ट्रे ॥ ३१ ॥

एषु स्तो टत्व भवति । पवट्टो प्रवृत्त । सदट्टो सन्दष्ट । मट्टी मृत्ति । वट्ट वृत्तम् । इट्टा इष्टा । पट्टण पत्तनम् । कवट्टिओ कदर्थित । उट्टो उष्ट्र । स दष्टोष्ट्रे तु ठत्वापवाद ॥

## वा न्तन्धौ मन्युचिन्हयोः ॥ ३२ ॥

अनयो सयुक्तयोर्यथासख्य न्त न्ध इत्येतावादेशौ वा भवत । मन्तू मण्णू । इन्ध चिण्ह ॥

## डल् फोर्मर्दितविच्छर्दछर्दिकपर्दवितर्दिगर्तसमर्दे ॥ ३३ ॥

एषु फोर्द्वितीयस्यस्तो ॥ सयुक्तस्य डत्व लिङ्भवति । मड्डिओ मर्दित । विच्छड्डो विच्छर्द । छड्डी छर्द । कवड्डो कपर्द । विअड्डी वितर्दि । गड्डो गर्त । समड्डो समर्द ॥

## ढोऽर्धर्द्धिश्रद्धामूर्ध्नि तु ॥ ३४ ॥

फोरित्यनुवर्तते । एषु स्तोर्द्वितीयस्य ढो भवति तु । अर्धम् अड्ढ अद्ध । ऋद्धि इड्ढी इद्धी । श्रद्धा सड्ढा सद्धा । मूर्धा मुड्ढा मुद्धा ॥

## दग्धविदग्धवृद्धिदष्ट्रावृद्धे ॥ ३५ ॥

एषु सयुक्तस्य ढो भवति । पृथग्योगान्नित्यम् । दड्ढो दग्ध । विअड्ढो विदग्ध । वुड्ढी वृद्धि । दाढा दष्ट्रा । वुड्ढो वृद्ध । कचिन्न—विद्धकइ णिरूविय वृद्धकविनिरूपितम् ॥

## पञ्चदशदत्तपञ्चाशति ण ॥ ३६ ॥

एषु स्तोर्णत्व भवति । पण्णरह पञ्चदश । दिण्ण दत्तम् । पण्णासा पञ्चाशत् ॥

## ज्ञम्नोः ॥ ३७ ॥

ज्ञ म्न–इत्येतयोर्णत्व भवति । ज्ञान णाण । सञ्ज्ञा सणा । विज्ञान विण्णाण । निम्न निण्ण । प्रद्युम्न पज्जुण्णो ॥

## स्तवे थो वा ॥ ३८ ॥

स्तवे सयुक्तस्य थो वा भवति । थवो तवो ॥

## रो हश्चोत्साहे ॥ ३९ ॥

थ इति वर्तते, वेति च । उत्साहे सयुक्तस्य थो वा भवति, तत्सनियोगेन हस्य च रेफ । उत्थारो उच्छाहो ॥

## स्तः ॥ ४० ॥

स्तस्य थकारो भवति । हत्थो हस्त । थुई स्तुति । थोअ स्तोकम् । पत्थरो प्रस्तर । सत्थि स्वस्ति ॥

## पर्यस्ते टश्च ॥ ४१ ॥

पर्यस्ते स्तस्य टो भवति, चकारात् थश्च । पलट्टो पलत्थो ॥

## वाऽऽत्मभस्मनि पः ॥ ४२ ॥

आत्मभस्मनो स्तो पो वा भवति । अप्पा अप्पाणो । अत्ता अत्ताणो । भप्पो भस्सो भस्म ॥

## ड्मक्मोः ॥ ४३ ॥

ड्मक्म इत्येतयो पो भवति। कुड्मल कुप्पल। रुक्मिणी रुप्पिणी। क्वचिद् मोऽपि–रुम्मी रुप्पी रुक्मी ॥

## ष्पस्फो फः ॥ ४४ ॥

ष्प स्प–इत्येतयो फो भवति। ष्प–पुष्प पुप्फ। शष्प सप्फ। निष्पाव० णिप्फावो। निष्पेष णिप्फेसो। स्प–स्पन्दन फदण। प्रतिस्पर्द्धी पडिप्फद्धी ॥

## भीष्मे ॥ ४५ ॥

फइत्यनुवर्तते। भीष्मे स्तो फत्व भवति। भिप्फो ॥

## श्लेष्मबृहस्पतौ तु फोः ॥ ४६ ॥

अनयो फोर्द्वितीयस्य सयुक्तस्य फो भवति तु। सेप्फो सेम्हो बिहप्फई बहप्पई ॥

## ग्मो म ॥ ४७ ॥

ग्मस्य मो भवति तु। जुम्म जुग्ग युग्मम्। तिग्ग तिम्म तिग्मम् ॥

## न्म ॥ ४८ ॥

न्मस्य मो भवति। पृथग्योगान्नित्यम्। जम्मो जन्म। मम्महो मन्मथ। मम्मणो मन्मन ॥

## ताम्राम्रयोर्म्ब ॥ ४९ ॥

अनयो सयुक्तस्य मकाराक्रा तो बकारो भवति। तम्ब ताम्रम्। अम्ब आम्रम्। तम्बीर अंम्बीर–इत्येतौ देश्यौ ॥

## ऊर्ध्वे भो वा ॥ ५० ॥

ऊर्ध्वे स्तोर्भो वा भवति। उब्भ उद्ध ॥

## ह्व ॥ ५१ ॥

भो वेत्यनुवर्तते। ह्वस्य भो वा भवति। जिब्भा जीहा जिह्वा ॥

## भश्च विह्वले ॥ ५२ ॥

विह्वले सयुक्तस्य वकारस्य भो वा भवति। विब्भलो विह्वलो ॥

काश्मीरे म्भ. ॥ ५३ ॥

काश्मीरे सयुक्तस्य म्भ इत्यादेशो भवति । कम्भार कम्हार ॥

लो वाऽऽर्द्रे ॥ ५४ ॥

आर्द्रे स्तोर्लत्व वा भवति । पुनर्वाग्रहणादुत्तरत्र न विकल्प । अल्ल उल्लं ओल्ल अद्द उद्द ओद्द ॥

र्ये सौकुमार्यपर्यस्तपर्याणे ॥ ५५ ॥

एषु र्यस्य लो भवति । सोअमल्ल सौकुमार्यम् । पल्लट्ट पर्यस्तम् । पल्लाण पर्याणम् । पल्लङ्को इति तु पल्यङ्कस्य ॥

अररिअ(१)रिज्जमाश्चर्ये ॥ ५६ ॥

आश्चर्ये र्यस्य अर रिअ रिज्ज इति त्रय आदेशा भवन्ति । अच्छअर अच्छरिअ अच्छरिज्ज ॥

डेरो ब्रह्मचर्यसौन्दर्ये च ॥ ५७ ॥

ब्रह्मचयसौन्दर्ययो चकारादाश्चर्ये च र्यस्य डित् एर इत्यादेशो भवति । बह्मचेर । सुन्देर । अच्छेर । डित्वात्टिलोप । चौर्यसमत्वात् । बह्मचरिअ । सुन्दरिअ । अच्छरिअ ॥

वा पर्यन्ते ॥ ५८ ॥

पर्यन्ते र्यस्य डेरो वा भवति । पेरन्तो पज्जन्तो ॥

धैर्ये रः ॥ ५९ ॥

वेत्यनुवर्तते । धैर्ये र्यस्य रो वा भवति । धीर धिज्ज ॥

तूर्यदशार्हशौण्डीर्ये ॥ ६० ॥

एषु स्तो रो भवति । पृथग्योगान्नित्यम् । तूर । दसारो । सोण्डीर ॥

बाष्पे होऽश्रुणि ॥ ६१ ॥

अश्रुवाचिनि बाष्पशब्दे स्तोर्हो भवति । बाहो नेत्रजलम् । अश्रुणीति किम् ? बप्फो ऊष्मा ॥

---

(१) अररीयरिज्जमाश्चय–इति ग० पु० पाठ ।

## कार्षापणे ॥ ६२ ॥

कार्षापणे स्तोर्हो भवति । काहावणो । बहुलाधिकारात्–कासावणो । कहा-वणो इत्यत्र 'सयोगे' इति पूर्वमेव ह्रस्व, पश्चादादेश । अथवा कर्षापण शब्दात् सिद्धि ॥

## न वा तीर्थदु खदक्षिणदीर्घे ॥ ६३ ॥

एषु सयुक्तस्य हत्व न वा भवति । तूह तित्थ तीर्थम् । दुह दुक्ख दु खम् । दुहिओ दुक्खिओ दु खित । दाहिणो दक्खिणो दक्षिण । दीहो दीहरो दिग्घो दीर्घ ॥

## कूष्माण्ड्या ण्डश्च तु ल ॥ ६४ ॥

कूष्माण्डीशब्दे प्रथमस्य सयुक्तस्य हकारो भवति, ण्ड इत्यस्य लत्व तु भवति । कोहली कोहडी । कोहली–इत्यत्र 'सयोगे' इति प्रागेव ह्रस्व, पश्चाल्लत्वम् ॥

## त्वथ्वद्ध्वा क्वचिच्चछजझा ॥ ६५ ॥

एतेषा यथासख्य च छ ज झ—इत्येते क्वचित् प्रयोगानुसारेण भवति । च–भुक्त्वा भोच्चा । ज्ञात्वा णच्चा । श्रुत्वा सोच्चा । छ–पृथ्वी पिच्छी । ज–विद्वान् विज्ज । झ–ध्वनि झणी । बुद्ध्वा बुज्झा । सअलपिच्छीविज्ज सकलपृथ्वीविद्वान् ॥

## ह्लो ल्ह ॥ ६६ ॥

ह्लकारस्य लकाराक्रान्तो हकारो भवति । कल्हार कल्हारम् । पल्हादो प्रह्लाद ॥

## श्मष्मस्मह्मामस्मररश्मौ म्ह ॥ ६७ ॥

एषा म्ह इत्यादेशो भवति, स्मररश्मिशब्दौ वर्जयित्वा । कम्हारो काश्मीर । गिम्हो ग्रीष्म । उम्हा ऊष्मा । विम्हओ विस्मय । अम्हारिसो अस्मादृश । बम्हा ब्रह्मा, बम्हणो । बम्हचेर ब्रह्मचर्यम् । अस्मररश्माविति किम् ? सरो । स्मर । रस्सी रश्मि ॥

## पक्ष्मणि ॥ ६८ ॥

ह्म इत्यनुवर्तते । पक्ष्मशब्दे स्तो ह्म इत्यादेशो भवति । पह्माइ पक्ष्माणि । पह्मललोअणो पक्ष्मललोचन ॥

श्नष्णस्नह्नह्लक्ष्णां ण्हः ॥ ६९ ॥

एषां ण्ह इत्यादेशो भवति श्न-प्रश्न पण्हो । शिश्न सिण्हो । ष्ण— विष्णु विण्हू । जिष्णु जिण्हू । कृष्ण किण्हो । उष्णीषम् उण्हीस । स्न— स्नात ण्हाओ । प्रस्नव पण्हवो । ज्योत्स्ना जोण्हा । ह्न—जह्नु जण्हू । ह्ण-पूर्वाह्ण पुव्वण्हो । अपराह्ण अवरण्हो । क्ष्ण-श्लक्ष्ण सण्ह । तीक्ष्ण तिण्ह ॥

सूक्ष्मे ॥ ७० ॥

सूक्ष्मे संयुक्तस्य ण्हो भवति । सुण्ह ॥

आश्लिष्टे लधौ ॥ ७१ ॥

आश्लिष्टे संयुक्तयोर्यथासंख्यं लधौ भवतः । आलिद्धो ॥

ठढौ स्तब्धे ॥ ७२ ॥

स्तब्धे संयुक्तयोर्यथासंख्यं ठढौ भवतः । ठड्ढो ॥

तो ढो रश्चारब्धे तु ॥ ७३ ॥

आरब्धे स्तो तकारो भवति तु, तत्संनियोगेन रस्य च ढ । आढत्तो आरद्धो ॥

सो बृहस्पतिवनस्पत्योः ॥ ७४ ॥

अनयोः संयुक्तस्य सकारो भवति तु । बहस्सई बहप्फई बिहस्सई बिहप्फई । वणस्सई वणप्फई ॥

शोर्लुक् खोः स्तम्बसमस्तनिस्पृहपरस्परश्मशानश्मश्रौ॥७५॥

स्तम्बादिषु शो शषसानां खोरादौ वर्तमानानां संयुक्तसम्बन्धिनां लुग्भवति । तम्बो । समत्तो । निप्पिहो । परोप्पर । मसाण । मसु ॥

श्चस्य हरिश्चन्द्रे ॥ ७६ ॥

हरिश्चन्द्रे श्चस्य लुग्भवति । हरिअन्दो ॥

कगटडतदपᳵकᳶपशोरुपर्यद्रे ॥ ७७ ॥

कगटडतदपानां जिह्वामूलीयोपध्मानीययोः शो शषसानां च संयुक्तसम्ब

न्धिनामुपरि स्थिताना लुग्भवति, द्रकार वर्जयित्वा क—मुक्त मुत्त । सिक्थ सित्थ । ग-दुग्ध दुद्ध । मुग्ध मुद्ध । ट-षट्पद छप्पओ । कट्फलं कप्फलं । ड-खड्ग खग्गो । षड्ज सज्जो । त-उत्पलम् उप्पल । उत्पात उप्पाओ । द-मद्गु मग्गू । मुद्गर मोग्गलो । उद्विग्न उव्विग्गो । प-सुप्त सुत्तो । गुप्त गुत्तो । ×क—दु ख दुक्ख । ×प —अ त पात अन्तप्पाओ । श—निश्चल निच्चलो । श्लक्ष्ण लण्ह । श्च्योतति चुअइ । ष—गोष्ठी गोट्ठी । षष्ठ चट्ठो । स-स्खलित खलिओ । स्नेह णेहो । अद्र इति किम् ? समुद्दो । चद्दो । भद्द । अद्र इति निषेधोऽस्य 'धात्रीद्रे रस्तिव'ति विकल्पिते रेफलोपेऽप्राप्ते द्रकारलोपो मा भूदिति ॥

## लवरामधश्च ॥ ७८ ॥

लवरा सयुक्तस्याऽधो वर्तमानाना चकारादुपरि स्थिताना च लुग्भवति । अध , ल—श्लक्ष्ण सण्ह । विक्लव विक्कओ । व—पक्व पक्को । विध्वस्त विद्धत्था । र—चक्र चक्क । ग्रह गहो । रात्रि रत्ती । उपरि, ल—उल्का उक्का । वल्कल वक्कल । व—शब्द सद्दो । अब्द अद्दो । लुब्धक लुद्धओ । र—अर्क अक्को । तर्क तक्को ॥

## मनयाम् ॥ ७९ ॥

सयुक्तस्याऽधो वर्तमानाना मनया लुग्भवति । म—युग्म जुग्ग । रश्मि रस्सी । स्मर सरो । न -नग्न नग्गा । लग्न लग्गो । मग्न मग्गो । य-श्यामा सामा । कुड्य कोड्ड । अत्र द्वितीयकल्मषमाल्यादिष्वेतत्सूत्रत्रयविधिप्राप्तौ यथादर्शन लोप । द्वितीय बिइओ । द्विगुण बिउणो । द्वादश बारह । द्वाविंशति बावीसा । द्वात्रिंशत् बत्तीसा । कल्मष कम्मस । शुल्ब सुब्व । क्वचित्तु अध -द्विप दिवो । द्वीप दीवो । द्विजाति दिआई । काव्य कव्व । दिव्य दिव्व । माल्य मल्ल । कुल्या कुल्ला । क्वचित्पर्यायेण—उद्विग्न उद्दिग्गो उव्विग्गो । रेफस्य तु सर्वत्रैव—सव्व । वक्क । चक्क । 'सर्वत्र लवरामचन्द्रे इति केचित्, तदयुक्तम् । चदो चन्द्रो इति स्वयमेवोदाहृतत्वात् तथाविधप्रयोगदर्शनाच्च । उत्तरत्र सूत्रोक्तविकल्प एकऽभ्युपगन्तव्य ॥

## धात्रीद्रे रस्तु ॥ ८० ॥

धात्रीशब्दे द्रशब्दे च रेफस्य लुग्भवति तु। धात्री धत्ती धारी। ह्रस्वात् प्रागेव रलोपे-धाई। द्र-चदो चद्रो। मदो मद्रो। रुदो रुद्रो। भद्द भद्र। समुद्दो समुद्रो। 'ह्रदे द्दह्यो'रिति ह्रदशब्दस्य द्दह्यो स्थितिपरिवृत्तौ द्रह इति रूपम्, तत्र च दहो इति। केचिन्नेच्छन्ति द्रे रलोपम्। द्रहशब्द संस्कृतेऽपीति केचित्। द्रहादयस्तरुणपुरुषवाचका नित्यं रेफसंयुक्ता देश्या एव। सिक्खतु वो द्रही द्रहम्मि पडिआ शिक्षयता वस्तरुणी तरुणे पतिता।

## ह्स्य मध्याह्ने ॥ ८१ ॥

मध्याह्ने ह्स्य लुग्वा भवति। मज्झण्णो मज्झह्नो॥

## ज्ञो ञोऽविज्ञाने ॥ ८२ ॥

ज्ञकारसम्बन्धिनो ञकारस्य लुग्भवति तु, अविज्ञाने विज्ञानशब्दे न भवति। ज्ञान जाण णाण। सर्वज्ञ सव्वज्जो सव्वण्णो। आत्मज्ञ अप्पज्जो अप्पण्णो। दैवज्ञ दइवज्जो दइवण्णो। इङ्गितज्ञ इगिअज्जो इगिअण्णो। अभिज्ञ अहिज्जो अहिण्णो। मनोज्ञ मणोज्ज मणोण्णो। प्रज्ञा पज्जा पण्णा। आज्ञा अज्जा अण्णा। संज्ञा सज्जा सण्णा। अविज्ञान इति किम्? विण्णाण॥

## द्वोर्द्वारे ॥ ८३ ॥

द्वारे दकारवकारयो पर्यायेण लुग्भवति तु। दार वार। पक्षे दुवार देर वेर॥

## रात्रौ ॥ ८४ ॥

रात्रिशब्दे संयुक्तस्य लुग्भवति तु। राई रत्ती॥

## रितो द्वित्वल् ॥ ८५ ॥

रेफानुबन्धस्य आदेशव्यञ्जनस्य द्वित्वं लिद्भवति। अक्कोल्ल अक्कोल। रुण्ण रुदितम्। करणिज्ज करणीयम्॥

## शेषादेशस्याऽह्रोऽचोऽखोः ॥८६॥

द्वित्वमिति वर्तते। संयुक्तयोरेकतरस्य लोपे योऽवशिष्यते स शेष, तस्य संयुक्तादेशस्य च अह्र हकाररेफवर्जितस्यअच स्वरात् परस्य अखोरनादौ वर्तमानस्य द्वित्वं लिद्भवति। शेष—समस्त समत्तो। निस्पह निप्पिहो

भुक्त भुत्त । दुग्ध दुद्ध । षट्पद छप्पश्रो । खड्ग खग्गो । उत्पलम् उप्पल । मुद्गर मुग्गरो । प्राप्त पत्तो । दुर्ग दुग्ग । दुःख दुक्ख । अन्तःपात अन्तप्पाश्रो । निश्चल णिच्चलो । दुष्कर दुक्कर । विप्लव विप्पश्रो । पक्व पक्क । धूर्त धुत्तो । रात्रि रत्ती । युक्त जुत्त । युग्म जुग्ग । रश्मि रस्सी । नग्न नग्गो । काव्य कव्व । आदेश—रक्त रग्गो । सक्त सग्गो । अमात्य अमच्चो । आत्मा अप्पा । आर्या अज्जा । उपाध्याय उवज्झाश्रो । सह्य सज्झो । साध्वस सज्झस । बृहस्पति बहप्फई । अह्व इति किम् ? विह्वल विह्लो । दुःख दुह । बाष्प बाहो । धात्री धारी । तूर्य तूर । धैर्य धीर । अच इति किम् ? कस कास्यम । वयस्य वअसो । सन्ध्या सम्मा । भिन्दिपाल भिंडिवालो । अखो रिति किम् ? स्खलित खलिश्रो । स्थूल थूरो । स्तम्भ खम्भो ॥

## दीर्घान्न ॥ ८७ ॥

शेषादेशस्येति वर्तते । लाक्षणिकादलाक्षणिकाच्च दीर्घात् परयो शेषादेशयो द्वित्व न भवति । लाक्षणिकात्—णीसासो निश्वास । फासो स्पर्श । दाढा दंष्ट्रा । अप्फासो अस्पर्श । अलाक्षणिकात्—पार्श्व पास । शीर्ष सीस । ईश्वर ईसरो । द्वेष्य वेसो । लास्य लास । आस्यम् आस । प्रेष्य पेसो । निर्माल्यम् ओमाल । आज्ञा आणा । आज्ञप्ति आणत्ती । आज्ञापनम् आणावण । अमच्चो इत्यादिषु 'सयोग' इति आदावेव ह्रस्व, पश्चाल्लोपे द्वित्वम् । अलाक्षणिकात् प्रायो द्वित्वाभाव प्रयोगतोऽनुसर्तव्य ॥

## कर्णिकारे णो वा ॥ ८८ ॥

कर्णिकारे शेषस्य णस्य द्वित्व वा न भवति । कण्णिआरो कणिआरो । णग्रहणमुत्तरार्थम् ॥

## धृष्टद्युम्ने ॥ ८९ ॥

आदेशस्य णस्य द्वित्व न भवति । पृथग्योगान्न विकल्प । धट्ठज्जुणो ॥

## वा से ॥ ९० ॥

से समासे शेषादेशयोर्द्वित्व वा भवति । णइग्गामो णइगामो । कुसुमप्पश्ररो कुसुमपश्ररो । देवत्थुई देवथुई । हरक्खन्दा हरखन्दा हरस्कन्दौ । आणालक्खभो आणालखभो ॥

## प्रमुक्तगे ॥ ९१ ॥

से इति वर्तते, वेति च । प्रमुक्तादिषु समासे यथादर्शन व्यञ्जनस्य द्वित्व वा भवति । पम्मुक्को पमुक्को प्रमुक्त । सप्पिपासो सपिपासो सपिपास । बद्ध प्फलो बद्धफलो बद्धफल । मलअसिहरक्खडो मलअसिहरखडो मलय शिखरखण्ड । तेल्लोक्क तेलोक्क त्रैलोक्यम् । सप्परितावो सपरितावो सपरिताप । परव्वसो परवसो परवश । पडिक्कूल पडिकूल प्रतिकूलम् । अद्दसण अदसण अदर्शनम् । इत्यादि । आकृतिगणत्वात्–पप्फुल्ल पफुल्ल प्रफुल्लम् । अप्परिहासो अपरिहासो अपरिहास । सप्परिहास सपरिहास सपरिहासम् । इत्यादि सिद्धम् ॥

## दैवगेषु ॥ ९२ ॥

दैवादिषु यथादर्शन व्यञ्जनस्य द्वित्व वा भवति । दइव दइव्व दैवम् । वाउल्लो वाउलो व्याकुल । णक्खो णहो नख । णेड्ड णेड नीडम । णिहित्तो णिहिओ निहित । माउक्कं माउक मातृकम् । कोउहल्ल काउहल कुतूहलम् । स्थूल थुल्लो थूरो । एक्को एओ एक । वाहित्त वाहिअ व्याहृतम् । तूष्णीक तुण्हिक्को तुण्हिओ । मूक मुक्को मूओ । सेवा सेव्वा सेवा । अम्हक्केर अम्हकेर अस्मदीयम् । भूअ भुत्त भूतम् । हुत्त हूअ हूतम् । ठिण्ण ठीण स्त्यानम् । खण्णू खाणू स्थाणु । सोच्चिअ सोचिअ । सोच्चे सोचे । चिअस्सा चिअसा । इत्यादि ॥

## तैलादौ ॥ ९३ ॥

तैलादिषु यथादर्शनमन्त्यस्याऽनन्त्यस्य च व्यञ्जनस्य द्वित्व भवति । पृथ ग्योगान्नित्यम् । तैल तेल्ल । व्रीडा विड्डा । प्रेम पेम्म । स्रोत सोत्त । प्रभूत पहुत्त । मण्डूक मड्डुक्को । उलूखलम् ओक्खल । यौवन जोव्वण । ऋजु उज्जू । विचकिल वेइल्ल । इत्यादि ॥

## पूर्वमुपरि वर्गस्य युजः ॥ ९४ ॥

वर्गसम्बन्धिनो युग्वर्णस्य शेषस्यादेशस्य वा द्वित्वप्रसङ्गे उपरि पूर्व मक्षर भवति । वर्गाणा द्वितीयस्योपरि प्रथम चतुर्थस्योपरि तृतीय मित्यर्थ । व्याख्यान वक्खाण । वृक्ष रुक्खो । व्याघ्र वग्घो । अर्घति अग्घइ । मूर्छा मुच्छा । अक्षीणि अच्छीणि । निर्झर णिज्झरो । मज्झ मध्यम् । निष्ठुर णिट्ठुरो । मुट्ठी मुष्टि । तित्थ तीर्थम् । हत्थी

हत्ती । हत्थो हस्त । णिद्धणो निर्धन । आलिद्धो आश्लिष्ट । गुल्फ गुप्फ । पुप्फ पुष्प । णिब्भरो निर्भर । विब्भमो विभ्रम । पिप्पल पिंचूलो । प्रमुक्तादौ द्वित्वे मलअसिहरक्खड । दैवादौ णक्खो । तैलादौ ओक्खल । समासे कइद्धओ कपिध्वज । द्वित्व इत्येव-त्यात खाओ ॥

## प्राक् श्लाघाप्लक्षशार्ङ्गे ङ्लोऽत् ॥ ९५ ॥

श्लाघादिषु ङ्ल, ङकारलकारयो प्राक् अत् अकारो भवति । सलाहा श्लाघा । पलक्खो प्लक्ष । सारग शार्ङ्गम ॥

## क्ष्मारत्नेऽन्त्यहल ॥ ९६ ॥

प्रागित्यनुवर्तते, अदिति च । क्ष्माशब्दे रत्नशब्दे च सयुक्तस्याऽन्त्यहल अन्त्यव्यञ्जनस्य प्रागत्व भवति । छमा खमा क्ष्मा । रअण रत्नम् ॥

## स्नेहाग्न्योर्वा ॥ ९७ ॥

अन्त्यहल इति वर्तते । स्नेहाग्न्यो सयुक्तस्याऽन्त्यहल प्रागत्व वा भवति । सणेहो णेहो । अगणी अग्गी ॥

## र्शर्षतप्त(१)वज्रेष्वित् ॥ ९८ ॥

र्शर्षइत्येतयोस्तप्ते वज्रे च सयुक्तस्याऽन्त्यहल प्रागित्व वा भवति । र्श-आदर्श आअरिसो आअस्सो । सुदर्शन सुअरिसणो सुदसणो । दर्शनम् दरिसण दसण । र्ष-वर्ष वरिस वास । वर्षा वरिसा वासा । वर्षशत वरिससअ वाससअ । तप्त तविओ तत्तो । वज्र वइर वज्ज ॥

## हर्षाऽमर्षश्रीह्रीक्रियापरामर्शकृत्स्नदिष्ट्यार्हे ॥ ९९ ॥

हर्षादिषु ह इत्यत्र च सयुक्तस्याऽन्त्यहल प्रागित्व भवति । पृथग्योगान्नित्यम् । हरिसो हर्ष । अमरिसो अमर्ष । सिरी श्री । हिरी ह्री । अहिरिओ अह्रीक । किरिआ क्रिया । परामरिसो परामर्श । कसिण कृत्स्नम् । दिट्ठिआ दिष्ट्या । र्ह-अरिहो अर्ह । गरिहा गर्हा । बरिहो बर्ह ॥

## स्याद्भव्यचैत्यचौर्यसमे यात् ॥ १०० ॥

स्याद्भव्यचैत्य इत्येतेषु चौर्यसमेषु च यकारात् प्रागित्व भवति । स्यात् सिआ । स्याद्वाद सिआवाओ । भविओ भव्य । चेइअ चैत्यम् । चौर्यसमे चौर्य चोरिअ । गाम्भीर्य गभीरिअ । धैर्य धीरिअ । भार्या भारिआ । सौन्दर्य

(१) र्शषवज्रतप्तेष्वित्—इति क पु पाठ ।

सुदरिअ। ब्रह्मचर्य बह्मचरिअ। सूर्य सूरिओ। शौर्य सोरिअ। आचार्य आअरिओ। वर्य वरिओ। वीर्य वीरिअ। चर्या चरिआ। स्थैर्य थेरिअ। इत्यादि। आकृतिगणत्वात्–पर्यङ्कादय, पलिअको पर्यङ्क ॥

## लादक्लीबेषु ॥ १०१ ॥

सयुक्तस्य लकारात् प्रागित्व भवति, अक्लीबेषु क्लीबप्रकारेषु न भवति। किलिन्न क्लिन्नम्। किलिट्ठ क्लिष्टम्। किलित्त क्लृप्तम्। पिलिट्ठ प्लुष्टम्। किलिन्न क्ला तम्। प्लोष पिलोसो। श्लेष्मा सिलिह्मो। श्लेष सिलेसो। शुक्ल सुकिल। क्लेद किलेओ। क्लेश किलेसो। प्लव पिलेवो। अम्लम् अबिल। ग्लायति गिलाअइ। म्लायते मिलाअइ। म्लान मिलाण। क्लाम्यति किलामइ। अक्लीबेष्विति किम्? क्लीब कीवो। विक्लव विक्कओ। क्लम कमो। प्लव पओ। विप्लव विप्पओ। शुक्लपक्ष सुक्कपक्खो। उत्प्लावयति उप्पावेइ ॥

## नात् स्वप्ने ॥ १०२ ॥

स्वप्ने सयुक्तस्य नकारात् प्रागित्व भवति। सिविणो सिमिणो ॥

## स्निग्धे त्वदितौ(१) ॥ १०३ ॥

नादिति वर्तते। स्निग्धे सयुक्तस्य नकारात् प्रागत्वमित्व च तु भवत। सिणिद्ध सणिद्ध। पक्षे णिद्ध ॥

## कृष्णे वर्णे ॥ १०४ ॥

अदिताविति वर्तते। वर्णवाचिनि कृष्णशब्देऽन्त्यहल प्रागदितौ भवत। कसणो कसिणो। वर्ण इति किम्? कण्हो कृष्ण (विष्णु) ॥

## अर्हत्युच्च ॥ १०५ ॥

अर्हशब्देऽन्त्यहल प्रागुत्त्वमदितौ च भवन्ति। अरुहो अरहो अरिहो। अरुहितो अरिहितो अरहतो ॥

## तन्व्याभे ॥ १०६ ॥

उदित्यनुवर्तते। उकारान्ता ईकारप्रत्ययान्तास्तन्व्याभास्तेषु संयुक्तस्याऽन्त्य हल प्रागुत्व भवति। तन्वी तणुई। लघ्वी लहुई। गुर्वी गुरुई। पृथ्वी पुहुई। मृद्वी मउई। बह्वी बहुई। पट्वी पडुई। इत्यादि ॥

## सूक्ष्मे रात् ॥ १०७ ॥

(१) स्निग्धे तु–इति क पु पाठ।

स्रुघ्ने संयुक्तस्य रात्पूर्वमुत्वं भवति । सुरुग्घं नगरम् ॥

एकाचि श्व स्वे ॥ १०८ ॥

एकस्वरयोः श्व स्व इत्येतयोः संयुक्तस्याऽन्त्यहलः प्रागुत्वं भवति । श्व कृतः सुवो कओ । स्वे जनाः सुवे जणा । एकाचीति किम् ? स्वजनः सजणो ॥

वा छद्मपद्ममूर्खद्वारे ॥ १०९ ॥

एषु स्तोरन्त्यहलः प्रागुत्वं वा भवति । छउमं छम्मं । पउमं पम्मं । मुरुक्खो मुक्खो । दुवारं पक्षे दारं वारं देरं वेरं ॥

ईल् ज्यायाम् ॥ ११० ॥

ज्याशब्देऽन्त्यहलः प्रागीत्वं लिद्भवति । जीआ ॥

ह्रश्च महाराष्ट्रे ह्रोर्व्यत्ययः ॥ १११ ॥

स्तोरिति निवृत्तम् । महाराष्ट्रशब्दे ह्रोः हकाररेफयोर्व्यत्ययः स्थितिपरिवृत्तिर्भवति । एकस्य स्थाने एको भवतीत्यर्थः । ह्रश्च ह्रस्वश्च दीर्घस्य भवति । मरहट्ठो ॥

लनोरालाने ॥ ११२ ॥

आलाने लकारनकारयोर्व्यत्ययो भवति । आणालो ॥

वाराणसीकरेण्वा रणोः ॥ ११३ ॥

अनयो रेफणकारयोर्व्यत्ययो भवति । वाणारसी । कणेरू । करेण्वामिति किम् ? स्त्रीलिङ्गनिर्देशादन्यत्र न भवति । एसो करेणू ॥

ललाटे डलोः ॥ ११४ ॥

ललाटे टस्य डत्वे डलयोर्व्यत्ययो भवति । णिडालं णडालं । 'लो ललाटे च' इत्याद्यस्य णत्वमेव ॥

ह्रदे दहयोः ॥ ११५ ॥

ह्रदे दहयोर्व्यत्ययो भवति । द्रहो दहो ॥

चलयोरचलपुरे ॥ ११६ ॥

अचलपुरे चलयोर्व्यत्ययो भवति । अलचउरं ॥

ह्ये ह्योर्वा ॥ ११७ ॥

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा भवति । गुह्यं गुय्हं गुज्झं गुरुअहं । सह्यः सय्हो सज्झो सहिअहं ॥

## लघुके ह्लोः ॥ ११८ ॥

लघुकशब्दे घस्य ह्त्वे ह्लोर्व्यत्ययो वा भवति । ह्लुओ लहुओ । घस्य व्यत्यये कृते पदादित्वात् ह्त्व न भवतीति ह्त्वकरणम् ॥

## रलोर्हरिताले ॥ ११९ ॥

हरिताले रलोर्व्यत्ययो भवति । हरिआला ह्लिआरो ।

## दर्वीकरनिवहौ दव्विरअणिह्वौ ॥ १२० ॥

एतयोर्यथासख्य दव्वीरअ णिह्व इति कृतव्यत्ययविधानौ निपात्येते । दव्विरओ । पक्षे दव्वीअरो सर्प । णिह्वो ॥

## गहिआऽऽद्या ॥ १२१ ॥

गहिआ इत्यादय शब्दा निर्वचनगोचरा निपात्यन्ते । गहिआ काम्यमाना ग्राह्या, काम्यमानत्वात् । ह्रस्व । चौर्यसमत्वात् प्रागित्व च । किमिघरवसण कौशेये, कृमिगृहवसनम् । कृमिविहिताबरणादेव तत्तन्तोरुत्पत्ते । णदिणी धेनु । नन्दिनीव नन्दिनी । वडिणाओ घर्घरकण्ठ । प्रतिशब्दवत्त्वात् ध्वने प्रतिपादन त्वाद्वा । वइरोडो पतिं रोटयति वञ्चयतीति । पो व । टो ड । अविणअवई अविनयपति । अणडो अनृतम् । प्रत्यादिपाठात्तस्य ड । अजडो अजड, शीघ्रकारित्वात् । छिण्णो स्मरशरच्छिन्नत्वात् । छिण्णालो सदाचारच्छिन्ना लात्यादत्त इति । चिच्छओ अचित्तत, नयनप्रीत्यनर्हत्वात् । अवर्णोरकारस्य लुक् । मदोली कामपरम्पराकारणत्वात् । आदेरातोऽत् । सचारी प्रीतिं सञ्चारयतीति दूती । सहउत्थिआ सहोत्थिता, कार्यानुकूलत्वात् । मराली मृदुस्वभावात् मधुर वचनत्वाद्वा । पेसणआरी प्रेक्षण करोतीति । अत्तिहरी दूती आर्तिहरी, स तपणशीलत्वात् । पडिसोत्तो प्रतिकूले, प्रतिमुख स्रोत प्रवाहो यस्यासौ । पडिक्खरो प्रतिकूले, प्रतिमुख चरतीति । जोओ, दोसणिजन्तो, दोसारअणो, समुद्दणवणीअ, चन्द्र । द्योतत इति द्योत । ज्योत्स्नायन्त्रम् । आत इ । जस्य द । नात्प्रागत्वम् । दोषारत्नम् । समुद्रनवनीतम्, मथनोत्थितत्वात् । चिरिचिरिआ चिलिचिलिआ, धारा । चिरिचिरीति चिलिचिलीति ध्वनिर्यस्या सा तथोक्ता । समुद्दहर अम्बुगृहम, जलधारोपचारात् । तम्बकुसुम कुरवक कुरण्टक च ताम्र कुसुम, तथाविधकुसुमत्वात् । मुहरोमराई भ्रू श्मश्रूर्वा मुखरोमराजि, तथा

विधस्वरूपत्वात् । थेवो बिन्दु, स्तोकत्वात् । धूमद्धअमहिसी कृत्तिका, धूमध्वजमहिष्य, अग्निना सभुक्तत्वात् । विसारो सैन्यम्, विसरणशीलत्वात् । अवहोओ विरह अपभोग, भोगासहत्वात् । पाओ, पअलाओ फणी, प्राणिघातुकत्वात् । पाप । पदानि लायति निगूहतीति पदलाप । अहिअलो क्रोध । अहिरिव वलति नाशयतीति अहिवल । सिहिण स्तन चूचुकवत्त्वात् । अस्त्यर्थे ण । थिरणेसो यो न क्वचिदपि स्थितिं बध्नाति । स्थिर यथास्यात्तथा न तिष्ठतीति थिरणेसो चपलहृदय । सूरङ्गो दीप । सूरवदङ्ग यस्यासौ । जोइक्खो ज्योतिष्क । पासावओ, गवाक्ष । पासो इति प्राकृते चक्षु, तदापद्यत इति पासावओ, अक्षि पश्यतीति पासो । कोप्पो अपराध । आत्मन कोप एवाऽपराध । उम्मुहो उन्मुख । उद्दणो उद्वहन । हस्य वस्य च लुक् । पहट्ठो प्रधृष्ट, गर्वीत्यर्थ । लम्बा केशा । लम्ब त इति लम्बा । वरलीवत् वेल्ली । वल्लरीवत् वेल्लरिआ । आदेरत ए । स्वार्थे कश्च । जणणहरो यक्षहरो राक्षस, तत्स्वभावत्वात् । जणउत्तो ग्रामप्रधाननर जनपुत्र, तद्वदाचरतीति । बह्महर, आरनाल, थेरोसण अम्बुजे । ब्रह्मगृहम् । आराद्दूरे समीपे च, नालमस्तीति आरनाल । द्वितीयस्यातोऽत् । स्थविरासनम्, स्थविरो ब्रह्मा । आत ओत् । कलिम, कन्दोट्ट उत्पले । के लीयत इति कलिम । डिम । क दादुट्टीकृते उद्गच्छतीति कन्दोट्ट । 'स्तौ' इत्योत्वम् । च दोज्ज, रअणिद्धअ कुमुदम् । च द्रेण द्योतत इति च दोज्ज । रजनिध्वजम् । घरअद मुकुरम् । गृहे चन्द्रवदुद्योतत इति । आआसतअ हर्म्यपृष्ठम्, आकाशतलमिति । आणदवसो नववध्वा रक्तारुणवस्त्रम्, प्रथमरजस्वलाया रक्ताक्त पट, आन दविषयत्वात् । सूरद्धओ दिवस । सूर्यो ध्वजो यस्यस । पल्लविअ लाक्षारक्त सपल्लवमिव पल्लवितम् । अच्छिवडण निमीलनम्, अक्षिपक्ष्मणा पतनम् । णीसको वृष नि शङ्क । एलविलो धनवाश्च, चकाराद्वृषश्च । सुभरओ दारिकागृह चटकश्च । सुख रतमस्यास्तीति । हट्ठमहट्ठो स्वस्थ । हृष्टश्चासौ महार्थश्च । णिमीसुओ निश्मश्रुक । आदेरत ई । जहणारोहो ऊरु । जघनेनारुह्यत इति । पल्लोट्टजीहो, अउज्झहरो रहस्यभेदी । पर्यस्तजिह्व । गुह्यहर । आदावडागम । णिहुअ निधुवन सुरत निभृतम् । अब्बुद्धसिरी मनोरथाधिकफलप्राप्ति, अबुद्धश्री । प्रमुक्तादिपाठाद् द्वित्वम् । बहुजाणो चोरो धूर्तश्च बहुज्ञान ।

परेओ परेत पिशाच । उज्जल्लो बहुबलवान् । दैवादिपाठाद् द्वित्वम् । जो विद्युत् ज्योतिर्वा । भिंग कृष्ण, भृङ्गवन्नीलत्वात् । भिंग सस्कृत इत्येके । णिअद्धण परिधान, निबध्यत इति निब धनम् । जहणूसअ चल्लणक, जघनांशुकम् । आतो बिन्दुना सह ऊत्वम् । पाउरण कवच, प्रावरणकत्वात् । आदेरत उ । ओअल्लो अपसार कम्पश्च । अपचारे ओअल्लो । तैलादित्वाद् द्वित्वम् । चवेडी करसम्पुटाघात । रइलक्ख रतिलक्ष्य जघनम् । वावडो कुटुम्बी व्यापृत । पुरिल्ला देवा, दैत्या । पुरा भवा । गोसण्णो मूर्ख गोसञ्ज, पशुप्रायत्वात् । परभत्तो भीरु, निष्पीडश्च । पर शत्रुस्तद्भक्तश्च । चच्चिक्को स्थासक चर्चिका । को द्वित्व पुस्त्व च । काल तमिस्रम्, नीलत्वात् । भट्टिओ, विष्णु भर्तृक, जगत्पोषकत्वात् । ऋत इत् । इदग्गिद्धूम तुहिनम्, इन्द्राग्निधूम । पत्थर पादताडनम् । प्रस्तरवत् पत्थर दु सहत्वात् । ओवाअओ अस्तकाल, अपातप । पिउच्छा, माउआ सखी । पितृष्वसेव मातृकेव हितकारित्वात् । पोरत्थो मत्सरी, पौलस्त्यवत् । दोसो कोप, आत्मदोषत्वात् । चच्चा चर्चा तलाहति । पम्हलो केसर, पक्ष्मलवत् । खधलट्ठी, खन्धमसो भुजस्कन्धस्य यष्टि । स्कन्ध प्रमृशतीति । अग्गिआयो, तबकिमी इन्द्रगोप । अग्निवत्कायोऽस्येति अग्निकाय । ताम्रकृमि । विहडणो अनर्थ, विघाटनम् । जोइओ ज्योतिरिङ्गण, खद्योत । सिंजिरो ध्वनि, शिञ्जनमेव । जोइओ, जोअणो, जोअडो, खज्जओ खद्योते । तारका ज्योतिष जोइस । द्योतनश्च जोअणा । द्योत जोडो । तस्य ड । खे द्योतत इति खद्योत खज्जओ । दरवल्लहो कातर । दरो भय तत्र वल्लभ, दरवल्लभो, वियोगभीरुत्वात् । पडरंगो महेश्वर, धवलाङ्गत्वात् । भोइओ ग्रामेश । भोग चरतीति भोगिक । सग्गहो मुक्त । सुष्ठु अग्रह स्वग्रह । सकरो रथ्या । सङ्कीर्यते अत्रेति सङ्कर । पअरो प्रवर अथदर । प्रकर्षेण वर । मइमोहिणी सुरा मतिमोहिनी । धारावासो दर्दुर प्रावृषेण्यत्वात् । कमल आस्य कलहश्च । कमलवत्कमलम् । क मस्तक मलतीति । वेणुसाओ, धुअराओ भ्रमर । वेणुशब्दवच्छब्दो यस्य स वेणुसाओ । सयुक्तस्य लुक् । ध्रुवराग, सदा सुस्वरत्वात् । इत्यादि । अस्मिन् गणे लिङ्गव्यत्यय प्रयोगाधीन ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ प्रथमाध्यायस्य चतुर्थ पाद ॥

## इति प्रथमाध्यायः ।

# द्वितीयोऽध्यायः ।

## मन्तमणवन्तमाआलुआलइरइल्लउल्लइन्ता मतुपः ॥ १ ॥

मतुप्प्रत्ययस्य म त मण वन्त मा आलु आल इर इल्ल उल्ल इन्त इत्येते दशादेशा यथाप्रयोग भवन्ति । म त–सिरिमन्तो श्रीमान् । पुण्णमन्तो पुण्य वान् । मण–धनवान् धणमणो । व त–धणवन्तो । भक्तिमान् भत्तिव तो । मा–हनुमान् हणुमा । पटवान् पडमा । आलु–णेहालु स्नेहालु । दआलु दयालु । ईसालू ईर्ष्यालु । आल–शब्दवान् सद्दालो । जटावान् जडालो । पटवान् पडालो । रसवान् रसालो । ज्योत्स्नावान् जोण्हालो । इर–ग्रहवान् गहिरो । इल्ल–शोभावान् सोहिल्लो । छायावान्–छाइल्लो । धामवान् जामिल्लो । उल्ल–विकारवान् विआरुल्लो । मासवान्–मसुल्लो । दर्पवान् दप्पुल्लो । इन्त–कहइन्तो कथावान् । माणइ तो मानवान । मतुप इति किम ? धणी । अत्थी ॥

## वतुपो (१)डित्तिअमेतल्लुक्चैतद्यत्तदः ॥ २ ॥

एतद् यद् तद् इत्येतेभ्य परस्य परिमाणार्थस्य वतुप्प्रत्ययस्य डित् इत्तिअ इत्यादेशो भवति, एतदो लुक् च । एतावत् एत्तिअ । यावत् जित्तिअ । तावत् तित्तिअं ॥

## किमिदमश्च डेत्तिअडित्तिलएद्दहम् ॥ ३ ॥

किमिदम्भ्या चादेतद्यत्तद्भ्यश्च परस्य वतुप्प्रत्ययस्य डानुबन्धा एत्तिअ इत्तिल एद्दह इत्येते आदेशा भव ति । एतावत् एत्तिअ इत्तिल एद्दह । यावत् जेत्तिअ जित्तिल जेद्दह । तावत् तेत्तिअ तित्तिल तेद्दह ॥

## इक पथो णस्य ॥ ४ ॥

'पथो ण नित्य'मिति य पथिन्शब्दात् णप्रत्ययो विहित तस्य इक इत्यादेशो भवति । पान्थ पहिओ ॥

---

(१) वतुपो डित्तिअमिदमेतल्लुक्चैतद्यत्तद —ख ।

## खस्य सर्वाङ्गात् ॥ ५ ॥

सर्वाङ्गाद् व्यापिन्यर्थे विहितस्य खप्रत्ययस्य इको भवति । सर्वाङ्गीण सव्वंगिओ ॥

## छस्यात्मनो णअ ॥ ६ ॥

आत्मन परस्य छप्रत्ययस्य णअ इत्यादेशो भवति । आत्मीयम् अप्पणअ ॥

## हित्थहास्त्रलः ॥ ७ ॥

सप्तम्यन्तात् सर्वनाम्नो विहितस्य त्रल्प्रत्ययस्य हि त्थ ह इति त्रय आदेशा भवन्ति । यत्र जहि जेत्थ जह । तत्र तहि तत्थ तह । कुत्र कहि कत्थ कह । अन्यत्र अण्णहि अण्णत्थ अण्णह ॥

## केर इदमर्थे ॥ ८ ॥

इदमर्थे विहितस्य छप्रत्ययस्य केर इत्यादेशो भवति । युष्मदीय तुम्हकेरो । अस्मदीय अम्हकेरो । क्वचिन्न भवति—मदीयपक्ष मइज्जपक्खो । पाणिनीय पाणिणीअ ॥

## राजपराड्डिक्कडक्कौ च ॥ ९ ॥

राजन् पर इत्येताभ्या परस्य इदमर्थे विहितस्य प्रत्ययस्य डितौ इक्क अक्क इत्येतौ भवत, चकारात्केरश्च । राजकीय राइक्क राअक्क राअकेर । परकीय परिक्क परक्क परकेर ॥

## डेच्चओ (१)युष्मदस्मदोऽणः ॥ १० ॥

युष्मदस्मद्भ्या परस्य इदमर्थस्याऽण्प्रत्ययस्य डित् एच्चअ इत्यादेशो भवति । यौष्माक तुम्हेच्चअ । आस्माक अम्हेच्चअ ॥

## वर्वतेः(२) ॥ ११ ॥

उपमानार्थे विहितस्य वतिप्रत्ययस्य वरा इत्यादेशो भवति । रित्त्वाद् द्वित्वम् । महुरव्व पाडलीउत्ते पासाआ । मधुरावत्पाटलीपुत्रे प्रासादा ॥

---

(१) एच्चओ—क । (२) वतेर्वः—क ।

## तैलस्याऽनङ्कोलाड्डेल्ल ॥ १२ ॥

अङ्कोलवर्जिताच्छब्दात्परस्य तैलस्य डित् एल्ल इत्यादेशो भवति । सुरहि जलेण कडेल्ल सुरभिजलेन कटुतैलम् । अनङ्कोलादिति किम् ? अङ्कोलतेल्ल ॥

## त्वस्य तु डिमात्तणौ ॥ १३ ॥

भावार्थे विहितस्य त्वप्रत्ययस्य डित् इमा त्तण इत्यादेशौ तु भवत । पीनत्व पीणिमा पीणत्तण । पुष्पत्व पुप्फिमा पुप्फत्तण। पक्षे-पीणत्त । पुप्फत्त । त्वस्येति किम् ? पीणआ पीणदा पीनता ॥

## दोत्तो तसः ॥ १४ ॥

त्विवत्यनुवर्तते । पञ्चम्यन्तात्सर्वनाम्न परस्य तसिल्प्रत्ययस्य दो त्तो इत्येतौ तु भवत । सव्वदो सव्वत्तो । एअदो एअत्तो । अण्णदो अण्णत्तो । कदो कत्तो । तदो तत्तो । जदो जत्तो । इदो इत्तो । पक्षे-सव्वओ इत्यादि ॥

## एकाद्दः सिसिआइआ ॥ १५ ॥

एकशब्दात्परस्य दाप्रत्ययस्य सि सिआ इआ इति त्रय आदेशा भवन्ति तु । एकदा एक्कसि एक्कसिआ एक्कइआ एकआ ॥

## ल्हुत्तः कृत्वसुचः ॥ १६ ॥

'वारे कृत्वसुच्' इति विहितस्य कृत्वसुच्प्रत्ययस्य हुत्त इत्यादेशो भवति । लित्वान्नित्यम् । सअहुत्तो । सहासहुत्तो । चुम्बिज्जइ सअहुत्तो । उपगूहिज्जइ सहासहुत्तो । रमिआ वि पुणो रमज्जइ णिवत्तणे णत्थि तुणति विअहुत इति तु अभिमुखार्थेन हुतशब्देन भविष्यति ॥

## भवे डिल्लोल्लडौ ॥ १७ ॥

भवार्थे नाम्न परौ इल्ल उल्ल इत्यतौ डितौ भवत । मातुलानी मामी तत्र भवा मामिल्लिआ । पुरे भव पुरिल्ल । अधो भव हेट्ठिल्ल । उपरि भवम् उवरिल्ल । उल्ल-आत्मभवम् अप्पुल्ल । अल्ललावपीच्छन्त्यन्ये ॥

## स्वार्थे तु कश्च ॥ १८ ॥

स्वार्थे नाम्न पर कप्रत्ययो भवति तु । चकारात् डिल्लोल्लडौ च । चन्द्र

चद्ओ । हृदय हिअअ । इह इहअ । आश्लिष्टम् आलिद्ध । द्वित्वेपि-बहुबहुलअ ।
ककारोच्चारण पैशाचीभाषार्थम्—वदन वतनक । डिल्ल-णिविजआसोअ
पल्लविल्लेण निर्जिताशोकपल्लवेन । पुरिल्लो पुरा पुरो वा । उल्लडु-
पिउल्लो प्रिय । मुहुल्ल मुखम् । हत्थुल्लो हस्त । पक्षे-चदो इत्यादि ।
कुत्सादिविशिष्टे तु सस्कृतवदेव क सिद्ध ॥

## उपरे संव्याने ल्लु ॥ १९ ॥

स्वार्थ इत्यनुवर्तते । सव्यानार्थे उपरिशब्दात् द्विरुक्तो लो भवति । लित्वा
न्नि यम् । उवरिल्ला । सव्यान इति किम् ? उवरिं ॥

## नवैकाद्वा ॥ २० ॥

नव एक इत्येताभ्या पर स्वार्थे द्विरुक्तो ला वा भवति । णवल्लो णवो ।
एक्कल्लो एक्का ॥

## मिश्राल्लिअश् ॥ २१ ॥

मिश्रशब्दात् स्वार्थे लिअ इत्यादेशो वा भवति । शित्वात्पूर्वस्य दीर्घ ।
मीसालिअ मिस्स ॥

## शनैसो ल्डिअ ॥ २२ ॥

शनै शब्दात् स्वार्थे लित् डिअ इअ इत्यादेशो भवति । सणिअ ॥

## मनाको डअ च वा ॥ २३ ॥

मनाक्शब्दात् स्वार्थे डित् अअ इअ च प्रत्ययौ वा भवत । मणाअ
मणिअं । पक्षे-मणा ॥

## रो दीर्घात् ॥ २४ ॥

वेत्यनुवर्तते । दीर्घशब्दात् स्वार्थे रो वा भवति । दीहर दीह दिग्घ ॥

## डुमअडमऔल् भ्रुवः ॥ २५ ॥

भ्रूशब्दात् स्वार्थे डमअ अमअ इत्येतौ डितौ लितौ भवत । लित्वा
न्नित्यम् । भुमआ भमआ ॥

## ल्लो वा विद्युत्पत्रपीतान्धात् ॥ २६ ॥

एभ्य पर स्वार्थे लो वा भवति । विज्जुला विज्जू । पत्तल पत्त । पीअलं पीअ । अधलो अधो ॥

## त्वादेः स ॥ २७ ॥

'तस्य भावस्त्वतलौ' इत्यादिना विहितत्वादे पर स्वार्थे स एव त्वादिर्वा भवति । मुदुत्वेन मउत्तआइ । मृदुतया मउत्तआए । ज्येष्ठतर जेट्ठअरो । कनिष्ठतर कणिट्ठअरो ॥

## इरः शीलाद्यर्थस्य ॥ २८ ॥

शीलधर्मसाध्वर्थेषु विहितस्य प्रत्ययस्य स्थाने इर इत्यादेशो भवति । हसनशील हसिरो । रोदनशील रोइरो । लज्जाशील लज्जिरो । जल्पशील जप्पिरो । वेदनशील वेइरो । उच्छ्वसनशील ऊसिरो । केचिदिर तृन एवाहु, तेषा नमिरकमिरादयो न सिध्यन्ति, तृनोत्तरादिना बाधितत्वात् ॥

## तुमत्तुआणतूणा क्त्वः ॥ २९ ॥

क्त्वाप्रत्ययस्य तु अत् तुआण तूण इति चत्वार आदेशा भवन्ति । तुम्-दट्ठु । मोत्तु । भोत्तु । अत्-भमिअ । रमिअ । तुआण-घेत्तुआण । साउ-आण । 'क्त्वासुपोस्तु सुणा'दित्यनुस्वारे कृते घेत्तुआण । सोउआण । तूण-घेत्तूण । सोऊण । काऊण । अनुस्वारे-घेत्तूण । सोऊण । काऊण । वदित्ता इति तु सिद्धावस्थाया वलोपे ॥

## वरइत्तगास्तृनाद्यैः ॥ ३० ॥

वरइत्त इत्यादय तृनादिप्रत्ययै सहिता स्वराद्यादेशविशेषिता बहुल निपात्यन्ते । वरइत्तो वरयितृक । नूतनवर । ऋतोऽत्, तो द्वित्व च । कणइल्लो, वाअडो शुक । कणइल्लो । कणई लतावाची देश्य, ततो भवार्थेऽस्त्यर्थे वा डिल्ल । वाअडो । वाचाटे द्वितीयस्यातोऽन् । मइलपुत्ती पुष्पवती । मलिन शब्दस्य मइलादेश, तस्मात् पुत्ती । दुग्धोट्टो दोग्घोट्टो दूणो द्विप । पिबते घोट्ट । द्वाभ्या पिबतीति । द्विपाने पकारेण सह इत ऊन्, दूणो । विरिचिरो धाराविरेचनशील । सूरल्ली मध्याह्न । सूरादस्त्यर्थे ल्लि । वेल्लहल्लो

कोमलो विलासी च। वल्लभात् ल, आदेरत एच्च। सद्दाल नूपुरम्। शब्दादालोऽस्त्यर्थे। अल्लिल्लो, पुल्लधओ, रसाओ भ्रमर। एषा क्रमात् अले स्वार्थे डिल्ल, लो द्वित्वं च। पुष्पन्धय, ष्पस्य ल। रसमत्तीति रसाओ। लअणी, लअणा, कणई लतायाम्। लताया स्वार्थे डणी डणा च। कनतेर्धातो स्त्रिया डई। शोभावहत्वात् बहुव्वजा कनीयसी श्वश्रू। वध्वा उक्तेर्थे व्वजा। भाउज्जा भ्रातृवधू। भ्रातुर्जायार्थे व्जा। मेहुणिआ मातुलात्मजा स्याली च। मैथुनिका। मिथुनादुक्तेऽर्थे इकण् डाच्च। रिमिणो रोदनशील। रुदे शीले डिमिण। पुणाली, छिच्छई, अडअणा असती। पुश्चल्या अस्य णा। धिक् धिक् छि छि। धिग्धिगिति गर्हणा यस्या सा। अस्त्यर्थे डई। अटे शीले अणा। अडअणा अटनशीला। चप्प लओ मिथ्याबहुभाषी। चपलात्क, पस्य च द्विरुक्त प। पिव्व जलम्। पिबतेर्द्विर्व। मघोणो मघवा। स्वार्थे ण, अवा इत्यस्य ओकार। सद्द लासिओ मयूर। सदालासिक नृत्यशीलत्वात्। 'इत्तु सदादौ'। वाउल्लो प्र लपिता। वाचो डुल्ल। पलहिअओ मूर्ख। उपलहृदय। उकारस्य लोप। चडिक्को कोप। चण्डात् कोपे डिक्क। चडिज्जो पिशुन कोपश्च। चण्डा दुक्तेऽर्थे डिज्ज। कुमणो म्लान। म्लायते कुमादेशो ण। अच्छिहरुल्लो द्वेष्य। अक्ष्णोर्हर, अदर्शनीयत्वात्। अक्षिहरात् स्वार्थे डुल्ल। छाइल्लो रूपवान्। छायाया डिल्लोऽस्त्यर्थे। कान्तिमानित्यर्थ। कुडुङ्गो कुङ्गा कुडुक्को लतागृहम्। कुडादुक्तेऽर्थे डुङ्ग डङ्ग डुकश्च। जरडो वृद्ध। जरतेरड। अच्छिविअच्छी परस्पराकृष्टि। आकर्षति व्याकर्षतीत्यत्र कृषे स्थाने अच्छि विअच्छी। धूमरी तुहिनम्। धूमवत् धूमरी, उपमाऽर्थे री। सोत्ती तरङ्गिणी। स्रोतसोऽस्त्यर्थे डी, तस्य द्वित्वम्। अहिसिओ ग्रहशङ्कया रुदित। अभि सीदते उक्तेऽर्थे डिक। गावी गौ। गो स्त्रिया डावी। पार्श्वयुगापवृत्ति उत्थल्लपत्थल्ला। उत्स्थलप्रस्थलात् पार्श्वद्वयापवृत्त्यर्थे डा, लो द्वित्व च। गज्जिलिओ स्पृष्टेऽङ्गे हास पुलकश्च। अङ्गे स्पृष्टे या हासो जायते तस्मिन् पुलकार्थे च गर्जतेरिलिअः। चित्तल रम्यम्। चित्त लातीति। पाडहुओ प्रतिभू। प्रतिभुवः स्वार्थे डुकण्, इतोऽत्व च। पासणिओ, पासाणिओ साक्षी। साक्षात् पार्श्वे नीयतेऽनेनेति पार्श्वात् नीयतेर्डिक।

अवरिज्ज अद्वितीयम् । अवरात् भावार्थे डिज्ज । लाहिल्लो लम्पट । लाभादुक्तेऽर्थे डिल्ल । कडिल्ल गहन, दौवारिक, कटिवस्त्रम्, निर्विवर, विपक्ष, आशीश्च । कटिशब्दाद् गहनादिष्वर्थेषु डिल्ल । रूवसिणी रूपवती । रूपादस्त्यर्थे स्त्रिया सिणी । कुडुविअ सुरतम् । कुटुम्बादुक्तेऽर्थे डिक । अन्तरिज्ज दशना कटिसूत्र । अन्तरादुक्तेऽर्थे डिज्ज । अवडुकिअ निपतित कूपाद्यवटेषु । अवटादुक्तेऽर्थे डुकिअ । बुड्डिरो महिष । मज्जतेरादेशात् बुड्डात् इर शीले । पिप्पिडिअ यत्किंचित्पठितम् । पिडिपिडीत्यनुकरणात् क, आदेर्डिकारस्य लुक्, पो द्वित्व च । सरिसाहुलो सदृश । सदृशात् स्वार्थे हुलश् । गुमिलो मूढ । मुहेरादेशाद् गुमेरिल । कच्च कार्यम् । कृञो डच्च । घडिआ, घडा घडी गोष्ठी । घटिता घटा घटना यस्या सा । कमणी नि श्रेणी । किरिकिरिआ कर्णोपकर्णिका कुतुक च । कर्णोपकर्ण कर्णपरम्पराप्राप्तकटुजल्पन तस्मिन्नर्थे कौतुके च किरिकिरीत्यनुकरणात् का । अण्णइओ सर्वत्रार्थे तृप्त । अर्णवादुपमानार्थे डिक । साहुली शाखा । स्वार्थे डुलि । जपेक्खिरमग्गिरओ यद्दृष्ट याचते । यद् दृष्टमित्यर्थे जपेक्खिरमिति निपातितात् परो याचनशीले मग्गिरओ कप्रत्ययान्त । गअसाउल्लो विरक्त । गतस्वादनुरक्तेऽर्थ डुल्ल । सिहडहिल्लो बाल । शिखण्डादुक्तेऽर्थे हिल्ल । शिखावानित्यर्थ । अलवलवसहो धूर्तो दुष्ट पृष्टवाची बलीवर्द । अलमत्यर्थं बलमस्य वृषभस्येति । बिन्दोर्लुक् । खुरहखुडी प्रणयकोप । तुरवद्धाति तोदयतीति तुदेरादेशात् खुडात् डी । सीउल्ली, सीउग्ग हिमकाले दुर्दिनम् । शीतात् डुल्लिडुग्गौ, तस्य लोप । वरडो वरण, प्राकार । वृञो रड । तत्ती तत्परता । तात् परस्य तात्पर्ये डत्ती । हीरणा त्रपा । त्रपार्थे णा हीरादेशश्च । गामरेडो । (१)योऽन्तर्भुक्त्वा ग्रामे भुङ्क्ते । ग्रामादुक्तेऽर्थे रेड । लडहा, वेल्लरी विलासवती । लसतेर्डहा सलोपश्च । वेष्ट्यन्ते विटा अनयेति वेष्टे परो री, ष्टो ल्लश्च । दुम्मइणी कलहपरा । दुर्मते स्वार्थे स्त्रिया णी । लज्जालुणी लज्जावती । लज्जालो स्वार्थे णी । तणाअ आर्द्रम् । तिम्यतेर्डणाअ । चिक्खअणो असहन । नञ्पूर्वात् सहतेर्यण, चिक्खादेशश्च । वेणिअ वचनीयम् । वचे

(१) योन्तर्भित्वा ग्रामं भुङ्क्ते—ख ।

रुक्तेऽर्थे डेरिअ । सुहसिओ निद्रालु । स्वप्नात् शीले सिय, प्नस्य च ह, आदेरत उ । यद्वा सास्ना सस्कृते निद्रा । 'स्तावकसास्ने' इत्युत्वे सति तत शीलार्थे डसिअ । वप्पिओ केदार । उप्यन्तेऽत्रेति वपे पिअ । बधोल्लो मेलक । बन्धेर्डोल्ल । वारिज्जो विवाह । वृञ्ज इज्जाणा । 'अचोञ्णिति' इति वृद्धि । साउल्लो, हडहड अनुराग । स्वादेरुक्तेऽर्थे ल्ल । हडत् हडदिति हृदय स्फुरति यत्रेति तस्य लुक् । माणसी मायावी मनस्वी च । कोडिल्लो, कोडिओ पिशुन । कुडेर्धातोरिल्लइकौ, उत ओत्व । अट्टणो आर्तज्ञ । आर्त जानातीति । गं जोलो । गञ्जते परिभवार्थे देश्याद् धातोर्डोल । वदिणो वि दी । स्वार्थे ण । तत्तिल्लो तच्छील । तत्ती तत्परता, ततोऽस्त्यर्थे ल, लो द्वित्वम् । ऊसुभिअ रुद्धगलरोदनम् । उत्पूर्वस्य सुम्भतेरुक्तेऽर्थे डिक । णिउक्को तूष्णीक मूक । निर्मुक्त । मस्य लुक्, दैवादिपाठाद् द्वित्व च । वहलो अपस्मार । ब्रह्मण उक्तेऽर्थे ल । ठाणिज्ज गौरवम् । स्थानादुक्तेऽर्थे । डिज्ज । उवउज्जो उपकारी । उपकृञो डुज्ज । एक्कलो प्रबल । एकादुक्तेऽर्थे, ल । माउसिआ माउआ मातृष्वसा । मातु परस्य स्वसु सिआच्चौ । महल्लो मुखर । महतो डल्ल । कुच्छिमई गर्भवती । कुक्षेरस्त्यर्थे मई । रिंछोली ऋक्षालि नक्षत्रमाला, तद्वत् रिंछोली । ऋतो बिन्दु । धोरणी पङ्क्ति । धारावद्धोरणी । आत ओ, उप मार्थे डणी च । पडमा दूष्यपटम् । पटादस्त्यर्थे मा । जुअणो युवा । स्वार्थे ण । करमरी हठहृता स्त्री बन्दी । करेण मृद्यमानादाकृष्यत इत्यस्मिन्नर्थे करोपपदान्मृद्नातेर्डरी । दड्ढाली दवत्वर्म दवाग्निमार्ग । दग्धात् डाली । कूडङ्गो, कूडओ लतागृहम् । कूटशब्दादुक्तेऽर्थे डङ्गडकौ । कारिम कृत्रिमम् । कृञो डारिम । जंघालुओ, जघामओ दूत । जघाया शीघ्रेऽर्थे लुअ मओ । बलामोडी बलात्कार । बलात् मुड्यते यत्रेति । चक्कल परिवर्तुलम् । चक्राल्ल । वाउल्ली पुत्रिका, कुमारीक्रीडोचिता सालभञ्जिका । कुमारीर्व्यापारयतीति व्याप्रेर्डुलि । मत्तवालो मत्त । स्वार्थे वाल । बहुणिआ ज्येष्ठभ्रातृवधू । वध्वा उक्तेऽर्थे णिआ । जभणभणो स्वैरभाषण । यद्वा तद्वा भणत्यधिकमिति । आदितृतीयाभ्यामनुस्वार, तलोपश्च । भाइरो भेज्जलो भेज्जो ओज्जरो भीरु । भिय शील इत्यर्थे डाइरडेज्जलडेज्जा, त्रसेरादेशात् ओज्जाच्च र । आहड सीत्कार । आहरति आद्रो प्रियहृदय

मिति । आहृञ्ञो ड । काअपिउला कोकिला । काक पितृवत् पोषको यस्या इत्यर्थे काकपितृशब्दात् ला । सुहल सुखम् । स्वार्थे ल । गत्तडी गायिका । गात्रीशब्दात् स्वार्थे डडी । दुद्दोलणा । दुग्धापि या दुह्यते गौरित्यत्रार्थे दुग्धात् दोलणा । माभाइ अभयम् । भियो भादेशात् मापूर्वात् इ । तोमरिओ शस्त्री प्रमार्जक । तोमरादुक्तेऽर्थे डिक । बहुहाडिणी । वध्वा उपरि परिणीयत इति वध्वा उक्तेऽर्थे हाडिणी । रूअरूइआ उत्कलिका । रूहरूहिकाशब्दे हकारयोर्लुक् । पिउसिआ, पिउच्चा पितृष्वसा । पितु परस्य स्वसु सिआ चौ । पुप्फी । पितु परस्य स्वसु फी च । अणुसूआ आसन्नप्रसवा । अनुसूते रासन्नप्रसवार्थे डा । भच्चो भगिनीसुत । भगिन्या सुतेऽर्थे च्च, भादेशश्च । ओहृल्ली अपसृति । सृतेर्हल्ली । मम्मक्को गर्व । मर्मण उक्तेऽर्थे क । मउप्परा मधुपर । उतोऽत्, धो उश्च । इत्यादि । कृष्टाऽनुपसर्गघृष्टवाक्यविद्वस्वाच स्पतिविष्टरश्रव प्रचेत प्रोक्तादीना क्विबादिप्रत्ययान्ताना च अग्निचित्सोमसुदित्या दीना सुग्लौसुम्लौ इत्यादीना च पूर्वविद्वद्भिरप्रयुक्ताना प्रतीतिवैषम्यकर प्रयोगो न कर्तव्य, शब्दान्तरैरेव तदर्थोऽभिधेय । यथा—कृष्ट कुशल । वाचस्पति गुरु । विष्टरश्रवा हरि । इत्यादि । घृष्टशब्दस्य सोपसर्गस्य प्रयोग इष्यत एव । मदरअडपरिघट्ट मन्दरतटपरिघृष्टम् । त दिअसणिघट्टाण । इत्यादि ॥

## अव्ययम्(१) ॥ ३१ ॥

अधिकारोऽयम्, आपादपरिसमाप्ते । इत पर ये वक्ष्यन्ते ते अव्यय सज्ञका ज्ञातव्या ॥

## आम अभ्युपगमे ॥ ३२ ॥

आम इत्यव्ययमभ्युपगमे प्रयोज्यम् । आम बहुला वणाली । आम सस्कृतेऽपीति केचित् ॥

## त वाक्योपन्यासे ॥ ३३ ॥

त इत्यव्यय वाक्योपन्यासे प्रयोज्यम् । त दिअसवदिमेक्ख ॥

## णइ चेअ चिअ च्च एवार्थे ॥ ३४ ॥

णइ चेअ चिअ च्च इत्येते अवधारणार्थे प्रयोज्या । गइओ णइ गदित एव । ज चेअ मुउलण लोअणाण अणुबध त चिअ कामिणीण यदेव मुकुलन लोचनानामनुबन्ध तदेव कामिनीनाम । दैवादिपाठात् द्वित्वम्—ते च्चिअ धण्णा, ते च्चिअ सुउरिसा त एव धन्यास्त एव सुपुरुषा । सो च्च वअरूवेण स एव वयोरूपेण । सो च्च सीले । स एव शीले ॥

## हद्धि निर्वेदे ॥ ३५ ॥

हद्धि इति निर्वेदे प्रयोज्यम् । हाधिक्छब्दवत्–हद्धि । हद्धि णो धामह हा धिक् नो धावत ॥

## दर अर्द्धेऽल्पे वा ॥ ३६ ॥

दर इत्यव्ययमर्धार्थे ईषदर्थे वा प्रयोज्यम् । दर विअसिअ अर्धमीषद्वा विकसितम् ॥

## किणो प्रश्ने ॥ ३७ ॥

किणो इत्यव्यय प्रश्ने वा प्रयोज्यम् । किणो धुवसि किं धुवसि किं धूनोषि ॥

## मिव पिव विव विअ व व्व इवार्थे ॥ ३८ ॥

मिव पिव विव विअ व व्व इति षडेते इवार्थे वा प्रयोज्या । कमल मिव । चदण पिव । हंसो विव । जीवो विअ । उअअस्स व ताविअसीलस्स उदकस्येव तापितशीलस्य । साअरो व्व गहिरो सागर इव गभीर । साअरो व्व खारओ सागर इव क्षार । पक्षे—णीलुप्पलमाला इव नीलोत्पलमालेव ॥

## किर इर हिर किलार्थे ॥ ३९ ॥

किर इर हिर इति त्रय किलार्थे वा प्रयोज्या । काल्ल किर खलहिअओ । तस्स इर पिअवअस्सो । वाहित्ता हिर देवी । पक्षे–एव्व किल तेण सिविणए भणिअ ॥

## अह्मो आश्चर्ये ॥ ४० ॥

आश्चर्ये अह्मो इति प्रयोज्यम् । अह्मो देवस्स गई । अम्हो परिणिज्ज खु ॥

## अब्भो पश्चात्तापसूचनादुःखसम्भाषणापराधानन्दादरखेदविस्मयाविषादभये ॥ ४१ ॥

अब्भो इति पश्चात्तापादिषु प्रयोज्यम् । पश्चात्तापे—अब्भो तह तेण कआ अहसज्जअकस्स साहमि । सूचनायाम्–अब्भो दुक्खअर अब्भो आरद्धो । दुःखे–अब्भो दलइ हिअअ । सम्भाषणे–अब्भो किमिण । अपराधे–अब्भो हरति हिअअ कह वि न वा होन्ति जुवईण । आनन्दे–अब्भो सुप्पहाअमिण । आदरे–अब्भो मह सफल जीव । खेदे–अब्भो ण जाणामि च्छेत्त(१) । विस्मये–अब्भो किं वि रहस्स जाणति धुत्ता जणब्भहिआ किमपि रहस्य जानन्ति धूर्ता जनाभ्यधिका । विषादे–अब्भो णासेंति धिअ पुलिअ पत्थेंति देंति रणरणअ नाशयन्ति धृतिं पुलक वर्तयन्ते ददति रणरणकम् । भये—अब्भो गइअहि तुमेण वरज्जइसाण जोरिहइ ॥

## हु पृच्छादाननिवारणे ॥ ४२ ॥

हु इति पृच्छादिषु प्रयोज्यम् । पृच्छायाम्–हुं साह सब्भाव । दाने–हुं गेह्णिअ पण्णविआ । निवारणे–हु णिल्लज्ज समोसरा ॥

## वणे निश्चयानुकम्प्यविकल्पे ॥ ४३ ॥

वणे इति निश्चयादौ प्रयोज्यम् । निश्चये—वणे देमि निश्चय ददामि । विकल्पे–वणे ण होइ भवति वा न भवति । अनुकम्प्ये—होइ दासो वणे ण मुचइ भवति दासोऽनुकम्प्यो न मुच्यते ॥

## सम्भावने अइ च ॥ ४४ ॥

अइ इति चकारात् वणे इति च सम्भावने प्रयोज्यम् । अइ दिअर किं ण पेच्छसि । णत्थि वणे ज ण देइ विपरिणामो ॥

## आनन्तर्ये णवरिअ ॥ ४५ ॥

णवरिअ इत्यानन्तर्ये प्रयोज्यम् । णवरिअ से रघुवइणो अनन्तरमस्य रघुपते ॥

---

(१) चित्त—ख० ।

## केवले णवर ॥ ४६ ॥

केवलेऽर्थे णवर इति प्रयोज्यम् । णवर पिआइ च्चिअ णिव्वतति केवल प्रियाण्येव निष्पतन्ति, पृथग्भवन्ति । केचित्तु—'केवलानन्तर्ययोर्णवरणवरिअ' इत्येकमेव सूत्रमाहु , त मते उभावप्युभयार्थौ ॥

## भद ग्रहणार्थे ॥ ४७ ॥

भद इति ग्रहणार्थे प्रयोज्यम् । भद आलोएसुम । गृहाणेत्यर्थ ॥

## भदि विकल्पविषादसत्यनिश्चयपश्चात्तापेषु च ॥ ४८ ॥

भदि इति विकल्पादिषु ग्रहणार्थे च प्रयोज्यम् । विकल्पे—भदि भोज्ज एत्ताहे भवेदिदानीम् । विषादे—भदि चरणे त ओसमाणिओ चरणौ तत सम्मानितौ । सत्ये-भदि तुह भणिओ । निश्चये-साहिज्जइ भदि तुह कज्जम् । पश्चात्तापे-भदि सहेहि धरिणि । ग्रहणार्थे—भदि आलोएसुम ॥

## सम्भाषणरतिकलहे रे अरे ॥ ४९ ॥

सम्भाषणरतिकलहयोर्यथासख्य रे अरे इत्येतौ प्रयोज्यौ । सम्भाषणे—रे रे हिअअ मउअसरिसा । रतिकलहे—अरे बहुवल्लह मए सम मा करेसु अवभासि ॥

## हरे क्षेपे च ॥ ५० ॥

क्षेपे चकारात् सभाषणरतिकलहयोश्च हरे इति प्रयोज्यम् । क्षेपे-हरे णिल्लज्ज । सभाषणे-हरे पुरिसा । रतिकलहे-हरे बहुवल्लह ॥

## थू कुत्सायाम् ॥ ५१ ॥

कुत्साया थू इति प्रयोज्यम् । थू णिल्लज्जो लोओ ॥

## ऊ गर्हाविस्मयसूचनाक्षेपे ॥ ५२ ॥

गर्हादिषु ऊ इति प्रयोज्यम् । गर्हायाम्-ऊ णिल्लज्ज । विस्मय-ऊ कह मुणिआअह । सूचने-ऊ केण वि ण विण्णाअ । प्रक्रान्तवाक्यस्य विपर्यास शङ्कया विनिवर्तनलक्षण आक्षेप , तत्र-ऊ किं मए भणिअ ॥

## पुणरुत्त कृतकरणे ॥ ५३ ॥

पुणरुत्त इति कृतकरणे प्रयोज्यम् । अइ सुव्वइ पसुलिमणि सहेहि पुणरुत्त अयि सुव्रते पासुले सहस्व कृतकरणम् ॥

## हु खु निश्चयविस्मयवितर्के ॥ ५४ ॥

हु खु इत्येतौ निश्चयादिषु प्रयोज्यौ । निश्चये–त विसुअ छिणसिर । तं खु सिरिए रभस्सि । विस्मये–को खु सहाससिरो । वितर्क ऊह सशयो वा । ऊहे–न हु नवरसग्गाहिआ एअ खु हसइ । सशये–जलहरो खु धूमो खु । सभावने चेष्यते–तरि उण हु ण वरउ म । एअ खु तुम हसइ । बहुला धिकारादनुस्वारात् परो हु न प्रयोक्तव्य ॥

## णवि वैपरीत्ये ॥ ५५ ॥

णवि इति वैपरीत्ये प्रयोज्यम् । णवि लोअणो ॥

## वेव्वे विषादभयवारणे ॥ ५६ ॥

वेव्वे इति विषादादौ प्रयोज्यम । वेव्वे तुए भणिअं ण विम्हरामो । कि मुल्लापयन्त्या उत्त खिद्यमानया त्वया वेव्वे इति भणित न विस्मराम । भये–वेव्वे पलाइद देण । वारणे–जूरणे अ वेव्वे इति । उल्लावरीइवि तु भ वेव्वे त्ति मअच्छिअं किणेद । उल्लावरीइवि इति स्वप्नायातम् ॥

## आमन्त्रणे वेव्वे च ॥ ५७ ॥

वेव्वे इति चामन्त्रणे प्रयोज्यम् । वेव्वे गोलो । वव्वे मुकुर रेहसि पाणी क्लीबा (?) ॥

## वा सख्या मामि हला हले ॥ ५८ ॥

आमन्त्रण इति वर्तते । सख्या आमन्त्रणेऽर्थे मामि हला हले इति प्रयोज्या । मामि सरिसक्खराणि पणमहमाण सहला । हला सउदले । हले हआसे । पक्षे–सहि एरिस च्चिअ गई ॥

## दे समुखीकरणे च ॥ ५९ ॥

संमुखीकरणे सख्या आमन्त्रणे च दे इति प्रयोज्यम् । दे पसिअ णिव त्तइ सुदरि यावत्प्रसीद निवर्तस्व सुन्दरि । दे सहि ॥

## ओ पश्चात्तापसूचने ॥ ६० ॥

पश्चात्तापे सूचनायां च ओ इति प्रयोज्यम् । पश्चात्तापे-ओ पत्ताअन्ति आए। सूचनायाम्-ओ अवि अणत्तिल्लो । परिकल्पार्थं उतादेशेन ओकारेणैव सिद्धम् । ओ विरएमिण हअले ॥

## अण णाइ नञर्थे ॥ ६१ ॥

नञर्थे अण णाइ इत्येतौ प्रयोज्यौ । अण चिंतिअ मुणति न चिन्तित जानति । णाइ करेमि रोसं न करोमि रोषम् ॥

## निश्चयनिर्धारणे वले ॥ ६० ॥

निश्चये निर्धारणे च वले इति प्रयोज्यम् । निश्चये—वले सीहो सिंह एवायम् । निर्धारणे-वले पुरिसो धणजओ खत्तिआणं पुरुषो धनञ्जय एव क्षत्रियाणाम् ॥

## मणे विमर्शे ॥ ६३ ॥

विमर्शे मणे इति प्रयोक्तव्यम् । मणे सूरो किंस्वित् सूर । इत्थमपीच्छन्त्यन्ये ॥

## माइ मार्थे ॥ ६४ ॥

माइ इति मार्थे प्रयोज्यम् । माइ कहिअ रोसं मा कार्षीद्रोषम् ॥

## अलाहि निवारणे ॥ ६५ ॥

अलाहीति निवारणे प्रयोज्यम् । अलाहि विसाएण अल विषादेन ॥

## लक्षणे जेण तेण ॥ ६६ ॥

लक्षणे जेण तेण इत्येतौ प्रयोज्यौ । भमररुअं जेण कमलवण । भमर भीसणमअं तेण कमलवण ॥

## त्वोद्वापोताः ॥ ६७ ॥

अप अप इत्येतौ उपसर्गौ उत इति विकल्पार्थो निपातश्च आ इति तु प्रयोक्तव्या । ओआरो । अवतार अपकारो वा । ओ विरएमि णहत्थले उत विरचयामि नभ स्थले । पक्षे-अवआरो इत्यादि ॥

## उ ओ उपेः ॥ ६८ ॥

उप इत्युपसर्ग उ ओ इति द्विधा प्रयोक्तव्य । उआरो, ओआरो उपकार ॥

## प्रत्येकमः पाडिएक्क पाडिक्क ॥ ६९ ॥

प्रत्येकमित्यस्यार्थे पाडिएक्क पाडिक्क इति तु प्रयोक्तव्यम् । पाडिएक्क पाडिक्क । पक्षे-पत्तेअ ॥

## स्वयमो (?) अप्पणा ॥ ७० ॥

स्वयमित्यस्यार्थे अप्पणा इति तु प्रयोक्तव्यम् । विसअ विसअति अप्पणा कमलवणा(१) । पक्षे-सअ चिअ मुणसि करणिज्ज स्वयमेव जानासि करणीयम् ॥

## एक्कसरिअ झटिति सम्प्रति ॥ ७१ ॥

झटित्यथ सम्प्रत्यर्थे च एक्कसरिअ इति तु प्रयोज्यम् । एक्कसरिअ झटिति सम्प्रति वा । पक्षे-झत्ति । सपइ ॥

## इहरा इतरथा ॥ ७२ ॥

इहरा इति इतरथार्थे प्रयोज्यम् । इहरा णिसामतेहि । पक्षे-इअरहा ॥

## मुधा मोरउल्ला ॥ ७३ ॥

मुधार्थे मोरउल्ला इति तु प्रयोज्यम् । मोरउल्ला । पक्षे-मुहा ॥

## अयि ऐ ॥ ७४ ॥

अयि इत्यर्थे ऐ इति तु प्रयोज्यम् । ऐ विहेइ । ऐ उम्मत्तिए । अतएव वचनादैकारस्यापि प्राकृते प्रयोग ॥

## उअ पश्य ॥ ७५ ॥

पश्य इत्यर्थे उअ इति प्रयोज्यम् । उअ णिच्चलनिप्फन्दा । पक्षे-ओअच्छादय पश्यत इत्यर्थे । उवह इति च दृश्यते । उवह गोट्ठअमज्झम्मि ॥

## इजेराः पादपूरणे ॥ ७६ ॥

---

(१) कमसरो—ख ।

इ जे र इत्येते पादपूरणे प्रयोज्या । णअरणा इ । अच्छी इ । अणोक इ । रूव तु जे गब्भइ । कमलगोवी र । अहो अहो हा नाम हे इत्यादय संस्कृत समत्वेन सिद्धा ॥

## प्याद्याः ॥ ७७ ॥

प्यादयो नियतार्थवृत्तय प्राकृते प्रयोज्या । पि । अपीत्यर्थे ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ द्वितीयाध्यायस्य प्रथम पाद ॥

---

## वीप्सार्थात्तद्चि सुपो मस्तु ॥ १ ॥

वीप्सार्थात् पदात्परस्य सुप स्थाने तदचि तस्य वीप्सार्थस्य सम्बन्धिन्यचि परे मो वा भवति । एकैकम् एक्कमेक्क । एकैकेन एक्कमेक्केण । अग्गे अग्गे अग्गमग्गम्मि । पक्षे-एक्केक्क इत्यादि ॥

## अम' ॥ २ ॥

सुप इत्यनुवर्तते । नाम्न परस्य सुप सम्बन्धिनोऽम द्वितीयैकवचनस्य स्थाने मकारो भवति । वच्छं । माल । गिरिं । गोरिं । गामणिं । तरु । बहु ॥

## श्लुग्जश्शसोः ॥ ३ ॥

नाम्न परयोर्जस् शस् इत्येतयोर्लुक् । शित्वात् पूर्वस्याऽचो दीर्घ । वच्छा । माला । गिरी । गोरी । गामणी । तरू । बहू । चिट्ठति पेच्छ वा ॥

## णशाम ॥ ४ ॥

नाम्न परस्य षष्ठीबहुवचनस्य णश् इत्यादेशो भवति । शिवात्पूर्वस्य दीर्घ । वच्छाण । वणाण । मालाण । गङ्गाण । गिरीण । दहीण । बुद्धीण । गामणीण । सुधीण । गोरीण । तरूण । महूण । वहूण । 'क्त्वासुपोस्तु सुणात्' इति वा ऽनुस्वारे-वच्छाण गिरीणं, इत्यादि ॥

## हिं हिँ हि भिस' ॥ ५ ॥

नाम्न परस्य भिस सबिन्दु सानुनासिक केवलश्च हिर्भवति । वच्छेहिं

वच्छेहिँ वच्छेहि । धणेहिं धणेहिँ धणेहि । मालाहिं मालाहिँ मालाहि । गिरीहिं गिरीहिँ गिरीहि । बुद्धीहिं बुद्धीहिँ बुद्धीहि । दहीहिं दहीहिँ दहीहि । गामणीहिं गामणीहिँ गामणीहि । गोरीहिं गोरीहिँ गोरीहि । तरूहिं तरूहिँ तरूहि । धेणूहिं धेणूहिँ धेणूहि । बहूहिं बहूहिँ बहूहि । महूहिं महूहिँ महूहि ॥

## हिंतोत्तोदोदु ङसिस् ॥ ६ ॥

नाम्न परो ङसिस् पञ्चमीविभक्ति हिंतो द्विरुक्तस्तो दो दु इति चतुर आदेशानापद्यते । वच्छाहिंतो 'भिस्भ्यस्सुपी'त्येत्वे वच्छेहिंतो वच्छत्तो वच्छादो वच्छादु । वृक्षात् वृक्षेभ्यो वा । दहिहिंतो दहिहित्तो दहिदो दहीदु । गोरीहिंतो गोरित्तो गोरीदो गोरीदु । तरूहिंतो तरुत्तो तरूदो तरूदु । महूहिंतो महुत्तो महूदो महूदु । धेणूहिंतो धेणुत्तो धेणूदो धेणूदु । दो दु इत्यत्र दकारो भाषान्तरार्थं, तेन शौरसेनीमागध्यो मलअकेदूदो मलअकेदूदु मलयकेतो । पैशाच्या 'तलू तदो' इति तकारार्थम्–गिरीतो । एव धनमाला गिरिबुद्धिग्रामणीतरुवधूप्रभृतय ॥

## सुतो भ्यसः ॥ ७ ॥

पञ्चमीबहुवचनस्य सुंतो इत्यादेशो भवति । वच्छासुतो वच्छेसुतो । धणासुतो धणसुतो । मालासुतो । गिरीसुतो । दहीसुतो । बुद्धीसुतो । गामणीसुतो इत्यादि ॥

## दिर्दोत्तोदु ङसौ ॥ ८ ॥

पञ्चम्यादेशेषु दो त्तो दु इत्येषु ङसि पञ्चम्येकवचने च परे पूर्वस्याचो दीर्घो भवति । वच्छाओ वच्छत्तो । 'सयोग' इति दीर्घेऽपि ह्रस्व, तथापि तद्ग्रहण भ्यसि एत्वबाधनार्थम् । ङसिनैव सिद्धे दोदुग्रहणमप्येत्वापवादायैव । वच्छाउ वच्छाहिंतो वच्छाहि । धणाओ धणत्तो धणाउ धणाहिंतो धणाहि । गिरीओ गिरित्तो गिरीउ गिरीहिंतो गिरीहि । गोरीओ गोरित्तो गोरीउ गोरीहिंतो गोरीहि । दहीओ दहित्तो दहीउ दहीहि दहीहिंतो । बुद्धीओ बुद्धीउ बुद्धीहिंतो बुद्धित्तो बुद्धीहि । गामणीओ गामणीउ गामणित्तो गामणीहिंतो । तरूओ तरूउ तरुत्तो तरूहिंतो । महूओ महूउ महुत्तो महूहिंतो । धेणूओ धेणूउ धेणुत्तो धेणूहिंतो । बहूओ बहूउ बहूहिंतो बहुत्तो ॥

## सोर्लुक् ॥ ९ ॥

नाम्न परस्य सो प्रथमैकवचनस्य लुग्भवति। हे देव। हे गगे। हे गोरि। हे लच्छि। हे गामणि। हे बहु॥

## ङसोऽस्त्रिया सर् ॥ १० ॥

ङस षष्ठ्येकवचनस्य स इत्यादेशो भवति, अस्त्रिया स्त्रीलिङ्गे न भवति। रित्वात् द्वित्वम्। वच्छस्स। धणस्स। गिरिस्स। दहिस्स। गामणिस्स। तरुस्स। महुस्स। अस्त्रियामिति किम्? गगाए। गोरीए। धेणूए। बहूए॥

## ङेर्मिर् ॥ ११ ॥

नाम्न परस्य सप्तम्येकवचनस्याऽस्त्रिया मिर् इत्यादेशो भवति। रित्वाद् द्वित्वम्। वच्छम्मि। धणम्मि। गिरिम्मि। दहिम्मि। तरुम्मि। बहुम्मि। अस्त्रियामित्येव-मलाए। बुद्धीए। धेणूए। बहूए॥

## अतो डो विसर्गः ॥ १२ ॥

अकारान्तात् परो विसर्ग डिदोकारो भवति। सर्वत सव्वओ। पुरत पुरओ। अग्रत अग्गओ। एव सिद्धावस्थापेक्षया। भवत भवओ। भवन्त भवतो। सन्त सतो। कुत कुओ॥

## सोः ॥ १३ ॥

अत इत्यनुवर्तते। अत परस्य सो स्थाने डो भवति। वच्छो। देव्वो॥

## वैतत्तद ॥ १४ ॥

अदन्ताभ्यामेतत्तद्भ्या परस्य सो डो वा भवति। एसो एस। सो स॥

## ङसेः श्लुक् ॥ १५ ॥

वेत्यनुवर्तते। अत परस्य ङसे श्लुग्वा भवति। शित्वात् पूर्वस्य दीर्घ वच्छा। धणा। पक्षे-वच्छाहिंतो वच्छत्तो वच्छाओ वच्छाउ॥

## डेर्डे ॥ १६ ॥

अत परस्य सप्तम्येकवचनस्य डिदेत्व वा भवति। वच्छे। धणे

पक्षे—वच्छम्मि । धणम्मि ॥

## ङसिसो हि ॥ १७ ॥

अत परस्य ङसिस पञ्चम्या हि इति वा भवति । वच्छाहि । धणाहि । भ्यस्येत्वे-वच्छेहि । धणेहि । पक्षे-हिंतोत्तोदोदु-इत्येते च ॥

## टो डेणल् ॥ १८ ॥

अत परस्य टावचनस्य डिदेण इत्यादेशो भवति । लित्वान्नित्यम् । वच्छेण । धणेण । अनुस्वारे-वच्छेणं । धणेणं ॥

## दिर्वा भ्यसि ॥ १९ ॥

अत इति पञ्चम्यन्तस्य षष्ठ्यन्तविभक्तिविपरिणाम । अतो भ्यसादेशे सति दि दीर्घो वा भवति । वच्छाहिंतो वच्छेहिंतो । वच्छासुंतो वच्छेसुंतो । वच्छाहि वच्छेहि । तोदोदुषु दीर्घ एव ॥

## शस्येत् ॥ २० ॥

अत शसि परे एद्वा भवति । वच्छे वच्छा पेच्छ ॥

## भिस्भ्यस्सुपि ॥ २१ ॥

भिस्-भ्यस्-सुप्-इत्येतेषु परेऽत एत्व भवति । पृथग्योगान्नित्यम् । भिसि-वच्छेहिं । भ्यसि-वच्छेहिंतो वच्छेसुंतो वच्छेहि । तोदोदुषु दीर्घ एव । सुपि-वच्छेसु ।

## इदुतोर्दि ॥ २२ ॥

भिस्-भ्यस्-सुपि परे इदुतो दि दीर्घो भवति । भिसि-गिरीहि गिरीहिं । एव-बुद्धीहिं । तरूहिं । धेणूहिं । महूहिं । भ्यसि-गिरीहिंतो गिरीओ गिरीउ गिरीसुंतो । एवं-बुद्धीओ । गामणीओ । तरूओ । महूओ आअअ । सुपि-गिरीसु । दहीसु । गामणीसु । तरूसु ठिअ । कचिन्न भवति-दिअभूमिसु दाणजलद्दिआइ द्विजभूमिषु दानजलार्द्रितानि । इदुतोरिति किम् ? वच्छेहि । वच्छेसुंतो । वच्छेसु ॥

## चतुरो वा ॥ २३ ॥

चतु शब्दस्य उद् तस्य भिस्-भ्यस्-सुपि परे दीर्घो वा भवति । चउहि चऊहि । चउहिंतो चऊहिंतो । चउसु चऊसु ॥

## पुंसो जसो डउडओ ॥ २४ ॥

इदुत इत्यस्य पञ्चम्यन्तपरिणाम । पुल्लिङ्गादिदुत परस्य जस अउ अओ इत्येतौ डितौ वा भवत । अग्गउ अग्गओ । वाअउ वाअओ । पक्षे-अग्गी अग्गिणो । वाऊ वाउणो । पुंसीति किम् ? बुद्धीइ । दहीइ । इदुत इत्येव-वच्छा ॥

## डवो उतः ॥ २५ ॥

पुंस इति वर्तते, जस इति च । पुल्लिङ्गादुत परस्य जस डित् अवो इति वा भवति । वाअवो । पक्षे-वाअओ वाऊ वाउणो । उत इति किम् ? वच्छा । पुंस इति किम् ? धेणूउ । बहूउ ॥

## णो शसश्च ॥ २६ ॥

योगविभागादिदुतौ गृह्येत । इदुत परस्य जस शसश्च णो इत्यादेशो भवति । गिरिणो । तरुणो चिट्ठन्ति पेच्छ वा । पक्षे—गिरी । तरू । पुंस इत्येव बुद्धी । धेणू । दहीइ । महूइ ॥

## नृनपि ङसिङसोः ॥ २७ ॥

पुंल्लिङ्गे नपुंसकलिङ्गे च वर्तमानादिदुत परयोर्ङसिङसोर्णो इत्यादेशो वा भवति । गिरिणो । तरुणो आगओ विआरो वा । पक्षे ङसि-गिरीओ । तरूओ । दहीओ । महूओ । ङस्—गिरिस्स । तरुस्स । दहिस्स । महुस्स । नृनपीति किम् ? बुद्धीए । धेणूए । ङसिङसोरिति किम् ? रिद्धी । समिद्धी । दिट्ठ । इदुत इत्येव-कमले । कमलस्स ॥

## टो णा ॥ २८ ॥

पुनपुंसके वर्तमानादिदुत परस्य टावचनस्य णा भवति । गिरिणा । दहिणा । गामणिणा । तरुणा । महुणा । खलपुणा । नृनपीत्येव—बुद्धीए । धेणूए । इदुत इत्येव-कमलेण ॥

## श्नुगनपि सो ॥ २९ ॥

इदुत परस्य सो शानुबन्धो लुग्भवति, अनपि नपुसकलिङ्गे न भवति। गिरी। बुद्धी। तरू। धेणू। अनपीति किम्? दहिं। महु ॥

## मङ् लुगसम्बुद्धेर्नपः ॥ ३० ॥

इदुत इति निवृत्तम्। नपो नपुसकलिङ्गात्परस्य सोर्मकारो ङानुबन्धो लुक् च भवति, असम्बुद्धे आमन्त्रणार्थस्य न भवति। वण। दहिं दहि। महु महु इति तु सिद्धावस्थापेक्षया। बहुलाधिकारादकारान्तान्न लुक् ॥

## श्निशिंशिङ् जश्शसोः ॥ ३१ ॥

नप इत्यनुवर्तते। नपुसकात्परौ जस् शस् इत्यतौ श्नि शिं शिङ् इति त्री नादेशानापद्येते शानुब धान्। शकारो दीर्घार्थं। ङकार सानुनासिकोच्चारणार्थं। वणाणि वणाइ वणाइँ। गुणाणि गुणाइ गुणाइँ चिट्ठंति पेच्छ वा। एव दहिमहुविंद्रादि। नप इत्येव—वच्छा ॥

## शोशु स्त्रिया तु ॥ ३२ ॥

जस्शसाविति वर्तते। स्त्रिया वतमानान्नाम्न परौ जस्शसौ ओत्वमुत्व च शितावापद्येते तु। मालाओ मालाउ। बुद्धीओ बुद्धीउ। एवम्—सहीधेणू बहूप्रभृतय। पक्षे—माला। बुद्धी। सही। धेणू। बहू। स्त्रियामिति किम्? वच्छा। जस्शसाविति किम्? मालाए कअ ॥

## आदीत सोश्च ॥ ३३ ॥

स्त्रियामित्यनुवर्तते। स्त्रियामीकारान्तान्नाम्न परस्य सोश्चकाराज्जस्शसो श्च आत्व तु भवति। एसा हसतीआ। जस् शस्—गोरीआ रोहंति पेच्छ वा। पक्षे—हसतीओ। गोरीओ ॥

## ङसे शशाशिशे ॥ ३४ ॥

स्त्रिया वर्तमानान्नाम्न परस्य ङसे अ आ इ ए इति चत्वार आदेशा शितो भवन्ति तु। मालाअ मालाआ मालाइ मालाए। गोरीअ गोरीआ गोरीइ गोरीए। एवम्—धेणू। बहू। पक्षे—मालाहिंता मालत्तो मालाओ

मालाउ । एव—बुद्धीहितो इत्यादि ॥

## टाङिङसाम् ॥ ३५ ॥

शशाशिशे इत्यनुवर्तते । स्त्रिया नाम्न परेषा टा ङि ङस् इत्येतेषा स्थाने अ आ इ ए इत्येते आदेशा शितो भवन्ति । योगविभागान्नित्यम् । जाआअ जाआआ जाआइ जाआए कअ, ठिअ, मुह वा । कप्रत्यये–जाइआअ जाइ–आआ जाइआइ जाइआए । बुद्धीआअ बुद्धीआआ बुद्धीआइ बुद्धी आए । कप्रत्ययाभावे–बुद्धीअ बुद्धीआ बुद्धीइ बुद्धीए कअ, ठिअ, अवण वा । स्त्रियामिति किम् ? वच्छेण । वच्छम्मि । वच्छस्स ॥

## नात' शा ॥ ३६ ॥

स्त्रिया वर्तमानाना नाम्न परेषा टा ङि ङस् इत्येतेषा प्राप्त शा इति शिदा कार आकारान्तान्न भवति । मालाअ मालाइ मालाए कअ, ठिअ मुह वा ॥

## पुसोऽजातेर्ङीत्रा ॥ ३७ ॥

अजातिवाचिन पुल्लिङ्गात् स्त्रिया वर्तमानात् ङीप्प्रत्ययो वा भवति । नीली नीला । काली काला । सहमाणी सहमाणा । सुप्पणही सुप्पणहा । इमीए इमाए । इमीण इमाण । एईए एआए । एईण एआणं । अजातेरिति किम् ? अआआ अआई अआए । अप्राप्ते विभाषाविधिरयम् , तेन गौरी, कुमारी इत्यादौ संस्कृतवदेव नित्यम् ॥

## ङीप्(१) प्रत्यये ॥ ३८ ॥

वेत्यनुवर्तते । 'टिड्ढाणञ्' इत्यादिसूत्रेण प्रत्ययनिमित्तो यो ङीप्प्रत्ययो विहित स स्त्रिया वर्तमानान्नाम्नो वा भवति । सहमाणी । कुरुअरी । पक्षे विकल्पसामर्थ्यादेव टाप् । सहमाणा । कुरुअरा ॥

## हरिद्राच्छाये ॥ ३९ ॥

अनयो ङीप् वा भवति । हलद्दी हलद्दा । छाही छाहा ॥

## किंयत्तदोऽस्वमामि सुपि ॥ ४० ॥

(१) ङीप्–इति नास्ति ख ।

सु अम् आम् वर्जिते सुपि परे किंयत्तद्भ्य स्त्रिया ङीप् वा भवति । कीओ काओ । कीए काए । कीसु कासु । जीओ जाओ । जीए जाए । जीसु जासु । तीओ ताओ । तीए ताए । तीसु तासु । अस्वमामीति किम् ? का । जा । सा । क । ज । त । काण । जाण । ताण ॥

## स्वसृगात् डाल् ॥ ४१ ॥

स्वस्रादे स्त्रिया वर्तमानात् आप्रत्ययो डिद्भवति । लित्वान्नित्यम् । ससा । णणदा । दुहिआ । दुहिआहि । दुहिआसु ॥

## डोश्लुकौ तु सम्बुद्धे ॥ ४२ ॥

'सो' इति य प्राप्तो डो, यश्च 'श्लुगनपि सो' इति श्लुक् विहितौ तौ सम्बुद्धेरामन्त्रणार्थस्य सो तु भवत । हे देव हे देवो। हे अज्ज हे अज्जो ।श्लुक्- हे हरि हे हरी । हे गुरु हे गुरू । हे बुद्धि हे बुद्धी । हे बहु हे बहू । जाइविसु द्धेण पहू जातिविशुद्धेन प्रभो । सम्बुद्धेरिति किम् ? दे कासवा । दे गोअरा । रेरे पिलिआ । रेरे णिग्घणिआ ॥

## ऋदन्ताड ॥ ४३ ॥

सम्बुद्धेरित्यनुवर्तते । ऋदन्तान्नाम्न परस्य सम्बुद्धे डित् अत्व तु भवति । हे पित हे पिअ । हे दात हे दाअ ॥

## नाम्नि डरम् ॥ ४४ ॥

नाम्नि संज्ञायाम् ऋदन्तात्परस्य सम्बुद्धेर्डित् अरमिति तु भवति । हे पिअरं हे पिअ । नाम्नीति किम् ? हे कत्तार ॥

## टापो डे ॥ ४५ ॥

टाबन्तात्परस्य सम्बुद्धेर्डित एत्व तु भवति । हे माले । हे अज्जे । पत्ते-हे माला । हे अज्जु । इत्यादि । टाप इति किम् ? हे पिउच्छा ।हे माउच्छा । बहुलाधिकारात् कचिदोत्वमपि । अम्मो भणामि भूणिए ॥

## ह्रस्वलीदूतः ॥ ४६ ॥

सम्बुद्धिनिमित्तयोरीदूतोर्ह्रस्वो लिद्भवति । हे णइ । हे लच्छि । हे बहु ॥

## क्विप ॥ ४७ ॥

सम्बुद्धेरिति निवृत्तम् । क्विबन्तयोरीदूतोर्ह्रस्वो भवति । गामणिणा । खल पुणा । गामणिणुतो । खलपुहिं ॥

## उद्दता त्वस्वमामि ॥ ४८ ॥

ऋदन्तानामुत्व भवति तु, अस्वमामि सु–अम् आम्–वर्जिते अर्थात् सुपि परे । जसि–भत्तू भत्तुणो भत्तओ भत्तउ । पक्षे–भत्तारा । शसि–भत्तू भत्तुणो । पक्षे–भत्तारा । टा–भत्तुणा भत्तारेण । भिस्–भत्तूहिं । पक्षे–भत्तारेहिं । ङसि–भत्तूहिंतो भत्तत्तो भत्तूओ भत्तूउ भत्तुणो । पक्षे–भत्ताराहिंतो भत्तारत्तो भत्ताराओ भत्ताराउ भत्तारा भत्ताराहि । ङस्–भत्तुणो भत्तुस्स । पक्षे–भत्तारस्स । ङौ–भत्तुम्मि । पक्षे–भत्तारो । सुप्–भत्तुसु । पक्षे–भत्तारेसु । बहुवचन व्याप्त्यर्थं, तेन यथादर्शनं नाम्नि उत्व वा भवति । जस्शसङसिङस्सु–पिउणो । जामाउणो । टा–भाउणा । भिस्–पिऊहिं । सुप्–पिऊसु । पक्षे–पिआर इत्यादि । अस्वमामीति किम् ? सु–पिआ । अम्–पिअर । आम्–पिअराण ॥

## आरः सुपि ४९ ॥

ऋदन्तस्य सुपि परे आर इत्यादेशो वा भवति । भत्तारो । भत्तारा । भत्तार । भत्तारे । भत्तारेण । भत्तारेहिं । एवम यत्राप्युदाहार्यम् । लुप्तविभक्त्यपेक्षया–भत्तारविहिअ ॥

## मातुरा अरा ॥ ५० ॥

मातृशब्दस्य आ अरा इत्यादेशौ भवत । माआ माअरा । माआओ माअराओ । माआइ माअराइ । माअ माअर । बहुलाधिकाराज्जनन्यर्थस्य आ, देवतार्थस्य अरा । माआए । कुच्छिआए । णमो माअराण । 'इदुन्मातु–' रित्युत्वे, माउणि । उद्दता त्वस्वमामीत्युत्वे तु–माउण माउए । समेत्तिअ वदे । सुपीत्येव–माइदेवो । माइगणो ॥

## सञ्ज्ञायामरः ॥ ५१ ॥

ऋतन्तस्य संज्ञाया सुपि परे अर इत्यादेशो भवति । पिअरा । पिअरा ।

पिअर । पिअरे । पिअरेण । पिअरेहिं । जामाअरो । जामाअरा । जामाअर । जामाअरे । जामाअरेण । जामाअरेहिं ॥

## आ सौ वा ॥ ५२ ॥

ऋदन्तस्य सौ परे आत्व वा भवति । पिआ । माआ । जामाआ । भाआ । भत्ता । कत्ता । पक्षे–पिअरो । माअरो । जामाअरो । भाअरो । भत्तारो । कत्तारो ॥

## राज्ञ ॥ ५३ ॥

वेत्यनुवर्तते । राजन्शब्दस्य नलोपे सति अ त्यस्य सौ परे आत्वं वा भवति । राआ । हे राआ । पक्षे आणादेशे–राआणो । हे राआणो । हे राअ–इति शौरसेन्याम् ॥

## टो णा ॥ ५४ ॥

राज्ञ इत्यनुवर्तते । राजन्शब्दात् परस्य टावचनस्य णा इत्यादेशो वा भवति । राइणा रण्णा । पक्षे राएण कअं ॥

## जश्शस्ङसिङसा णोश् ॥ ५५ ॥

राज्ञ परेषा जस्शस्ङसिङस्–इत्येतेषा णो इत्यादेश शिद्भवति वा । जस्–राआणो चिट्ठन्ति । पक्षे–राआ । शस्–राआणो पेच्छ । पक्षे–राआ । ङसि–राइणो रण्णो आअओ । पक्षे–राआहिंतो राअत्तो राआओ राआउ राआ राआहिं । ङस्–राणो रण्णो धण । पक्षे–राअस्स ॥

## णोणाङिष्विदना जः ॥ ५६ ॥

राजन्शब्दसम्बन्धिनो जकारस्य अनासहितस्य णो णा इत्यादेशयो ङिद्वचने च परे इकारो वा भवति । राइणो चिट्ठन्ति पेच्छ आअओ धण वा । राइणा कअं । राइम्मि ठिअं । पक्षे–राआणो । रण्णा । राएण । राअम्मि ॥

## इणममामा ॥ ५७ ॥

अना ज इत्यनुवर्तते । राजन्शब्दसम्बन्धिनो जकारस्य अनासहितस्य अम् आम् इत्येताभ्या सह इण इत्यादेशो वा भवति । राइण पेच्छ, राण वा । पक्षे–राअ राआण ॥

## भिस्भ्यसाम्सुप्स्वीत् ॥ ५८ ॥

राजन्शब्दस्य अनासहितस्य जस्य भिस्भ्यस्आम्सुप्-इत्येतेषु परेषु ईकारो वा भवति। भिस्-राईहि। भ्यस्-राईहिंतो राईसुतो राईहि। आम्-राइण। सुप्-राईसु। पक्षे-राएहिं-इत्यादि ॥

## ङसूङसिटा णोणोर्डण् ॥ ५९ ॥

राजन्शब्दस्य अनासहितस्य जस्य ङसूङसिटावचनाना यौ णो णा इत्यादेशौ तयो परयो डित् अण इत्यादेशो वा भवति। रण्णो राइणो धण आअओ वा। रण्णा राइणा कअ। ङसूङसिटामिति किम्? राआणो चिट्ठति पेच्छति वा। णोणोरिति किम्? राअस्स। राअओ। राएण ॥

## पुस्याणो राजवच्चानः ॥ ६० ॥

पुल्लिङ्गे वर्तमानस्य अन्-इत्यस्य स्थाने आण इत्यादेशो वा भवति। पक्षे यथादर्शन राजवत् कार्यं च भवति। आणादेशे च 'सो' इत्यादय प्रवर्तन्ते। पक्षे तु राजवत् 'टोणा, जसूशसूङसिङसा णोश्, इणमामा' इति प्रवर्तन्ते। अप्पाणो। अप्पाणा। अप्पाण। अप्पाणे। अप्पाणेण। अप्पाणेहिं। अप्पाणाओ। अप्पाणासुतो। अप्पाणस्स। अप्पाणाण। अप्पाणम्मि। अप्पाणेसु। पक्षे राजवत्। अप्पा अप्पो। दे अप्पा दे अप्पो। अप्पाणो चिट्ठन्ति पेच्छ वा। अप्पणा। अप्पेहिं। अप्पाहितो। अप्पत्तो। अप्पाओ। अप्पाउ। अप्पा। अप्पाहि। अप्पासुतो आअओ। अप्पाणो। अप्पाण। अप्पम्मि। अप्पेसु। राआणो। राआणा राआण। राआणे। राआणेण। राआणाहिं। राआणाहिन्तो। राआणासुतो। राआणस्स। राआणाण। राआणम्मि। राआणेसु। पक्षे-राआ इत्यादि। एव-जुवाणो। जुवाणा। जुवा। ब्रह्मन्-बह्माणो बह्मा। अध्वन्-अद्धाणो अद्धा। उक्षन्-उच्छाणो उच्छा। ग्रावन्-गावाणो गावा। पूषन्-पूसाणो पूसा। तक्षन्-तक्खाणो तक्खा। मूर्धन्-मुद्धाणो मुद्धा। श्वन्-साणो सा। सुकर्मन्-सुकम्माणो सुकम्मा। पेच्छइ स कइ सुकम्माणो। पश्यति स कथ सुकर्मा। पुसीति किम्? शर्मन्-सम्म ॥

## टो वात्मनो णिआणइआ ॥ ६१ ॥

आत्मन परस्य टावचनस्य णिआ णइआ इत्यादेशौ वा भवत । पुन र्वाग्रहणादुत्तरत्र न विकल्प । अप्पणिआ अप्पणइआ । पक्षे-अप्पाणेण । अप्पेण ॥

## सर्वादेर्जसोऽतो डे ॥ ६२ ॥

सर्वादेरदन्तात्परस्य जस एत्व डिद्भवति । सव्वे । अण्णे । जे । ते । के । इअरे । अवरे । एए । अत इति किम् ? सव्वाओ ॥

## डेस्त्थर्सिस्मि ॥ ६३ ॥

सर्वादेरित्यनुवर्तते, अत इति च । सर्वादेरद तात्परस्य ङे स्थाने त्थ सिं स्मि इति त्रय आदेशा भवन्ति । सव्वत्थ सव्वसिं सव्वम्मि । अण्णत्थ अण्णसिं अण्णम्मि । एव सर्वत्र । अत इत्येव—अमुम्मि ॥

## अनिदमेतदस्तु कियत्तदः स्त्रिया च हिं ॥ ६४ ॥

इदमेतद्वर्जितात् सर्वादे परस्य ङे हिं-इत्यादेशा भवति तु कियत्तद्भ्य स्त्रियामपि । सव्वहिं । अण्णहिं । जहिं । तहिं । कहिं । पक्षे-सव्वत्थ सव्वसिं सव्वम्मि-इत्यादि । स्त्रिया किम् ? कियत्तद -काहि । जाहिं । ताहिं । बाहुल कादेव कियत्तदाऽस्वमामि, सुपीति ङीब् वा भवति । काए कीए । इत्यादि । अनिदमेतद इति किम् ? इमस्सि । अस्सि ॥

## आमा डेसिं ॥ ६५ ॥

त्वित्यनुवर्तते । सर्वादे परस्याम डित् एसिं-इत्यादेशो भवति तु । सव्वेसिं । अण्णेसिं । इमेसिं । एसि । एएसिं । जेसिं । तेसिं । केसिं । पक्षे-सव्वाण । अण्णाण । इत्यादि । आमामिति बहुवचनात् स्त्रीविषयस्यापि सर्वासा सव्वेसिं । एवम्-अण्णेसिं । जेसिं । तेसिं ॥

## कितद्भ्या सश् ॥ ६६ ॥

कितद्भ्या परस्याम शित् सकारो वा भवति । कास । तास । पक्षे-केसिं । तेसिं ॥

## कियत्तद्भ्यो डस् ॥ ६७ ॥

सशू इत्यनुवर्तते । किंयत्तद्भ्य परो ङस् ( तस्य ) सशू इत्यादेशो वा भवति । कास । जास । तास । पक्षे—कस्स । जस्स । तस्स । बहुलाधिकारात् कियत्तद्भ्य स्त्रियामपि । कस्या कास । यस्या जास । तस्या तास । पक्षे—काए । जाए । ताए ॥

## ईतः सेसार् ॥ ६८ ॥

ङसिति वर्तते । ईकारान्तेभ्य किंयत्तद्भ्य परस्य ङस से सा इति वा भवत । सा इत्यस्य रित्वात् द्वित्वम् । कीसे । किस्सा । पक्षे—कीअ । कीआ । कीइ । कीए । जीसे । जिस्सा । जीअ । जीआ । जीइ । जीए । तीसे । तिस्सा । तीअ । तीआ । तीइ । तीए ॥

## डिरिआडाहेडाला काले ॥ ६९ ॥

कालेऽभिधेये किंयत्तद्भ्य परो ङि इआ इत्यादेशम्, आहे आला इत्येतौ च डितावापद्यते वा । कइआ काहे काला । जइआ जाहे जाला । तइआ ताहे ताला । ताला जाअति गुणा, जाला त सहिअएहिं घेप्पति । तदा जायन्ते गुणा, यदा ते सहृदयैर्गृह्यन्त । पक्षे—कहिं कत्थ कस्सिं कम्मि इत्यादि ॥

## म्हा ङसेः ॥ ७० ॥

किंयत्तद्भ्य परस्य ङसे म्हा इत्यादेशो भवति तु । कम्हा । जम्हा । तम्हा । पक्षे—काओ । जाओ । ताओ ॥

## किमो डीसडिणो ॥ ७१ ॥

किम परस्य ङसे ईस इणो इत्यादेशौ डितौ भवत । कीस किणो । पक्षे—कम्हा काओ ॥

## डो तदस्तु ॥ ७२ ॥

तद् परस्य ङसे डिदोत्वं तु भवति । तो तम्हा तस्मात् ॥

## इदमेतत्किंयत्तद्भ्यष्टो डिणा ॥ ७३ ॥

एभ्य सर्वादिभ्योऽदन्तेभ्य परस्य टावचनस्य इणा इति डिद्भवति तु । इमिणा इमेण । एदिणा एदेण । किणा केण । जिणा जेण । तिणा तेण ॥

## क्वचित्सुपि तदो णः ॥ ७४ ॥

सुपि परे तच्छब्दे णो भवति तु, क्वचित्-लक्ष्यानुसारेण। ण पेच्छ त पश्य। स्त्रियामपि-हत्था णमिअमुही भणइ ण तिअडा। हस्तात् नमितमुखी भणति ता त्रिजटा। णेण भणिअ तेन भणितम्। णीए तया। णेहि कअ तै कृतम्। णाहि कअ ताभि कृतम् ॥

## अतसि च किमो ल्कः ॥ ७५ ॥

सुपीत्यनुवर्तते। किंशब्दस्य त्रतसो सुपि च परे लित् को भवति। की। के। क। के। केण। केहिं। त्र-कत्थ कसिं। तस्—कत्तो कदो ॥

## इदम इम ॥ ७६ ॥

इदम सुपि परे इम इत्यादेशो भवति। इमो। इमे। इम। इमे। इमेण। इमेहिं। स्त्रियामपि—इमा ॥

## पुसि सुना त्वय स्त्रियामिमिआ ॥ ७७ ॥

इदम सुना सहितस्य पुलिङ्गे अयमिति स्त्रियाम्-इमिआ इति तु भवति। अय कअकज्जो। इमिआ सणिअमाआ। पक्षे—इमो। इमा ॥

## अत्सुस्सिंहिस्से ॥ ७८ ॥

इदम सुप्ङिभिस्ङस्-इत्येतेषु सु स्सि हि स्स इत्यादेशेष्वापन्नेषु अत्व तु भवति। एसु। अस्सिं। एहि। अस्स। पक्षे-इमेसु। इमस्सिं। इमेहिं। इमाहिं। इमस्स ॥

## टासासि णः ॥ ७९ ॥

टासति तृतीयाविभक्ति, अस्-इति द्वितीया विभक्ति, तयो परयोरिदम स्थाने ण इत्यादेशो भवति तु। णेण णेहि कअं। ण णे पेच्छ। पक्षे—इमेण। इमेहिं। इम। इमे ॥

## इहेण ङ्यमः ॥ ८० ॥

ङि अम्-इत्याभ्या सहितस्य इदम स्थाने इह इण इत्येतौ क्रमेण तु भवत। ङि—इह। अम्—इण। पक्षे—इमस्सिं इमम्मि। इम ॥

## न त्थ ॥ ८१ ॥

इदम परस्य ङिद्वचनस्य 'ङेस्त्थस्सिम्मि' इति प्राप्त त्थो न भवति। इह इमस्सि इमम्मि ॥

## क्लीबे स्वमेदमिणमिणमो ॥ ८२ ॥

नपुसके वर्तमानस्य इदम सु अम् इत्याभ्या सहितस्य इद इण इणमो इति त्रय आदेशा भवन्ति। इद इण इणमो चिट्ठति पेच्छ वा ॥

## किं किं ॥ ८३ ॥

क्लीबे, स्वमेति च वर्तते। क्लीबे वर्तमान किम्शब्द स्वमा सहित किं मेव भवति। किं कुल। किं भणासि ॥

## तदिदमेतदा सेसिं तु ङसामा ॥ ८४ ॥

तद् इदम् एतद्–इत्येतेषा स्थाने ङस् आम् इत्याभ्या सह यथासख्य से सि इत्यादेशौ तु भवत। तद्–से गुणा। तस्य गुणा, तस्या वा। सिं उच्छासो। तेषामुत्साह, तासा वा। इदम्—से सिल। अस्य शीलम्, अस्या वा। सि गुणा। एषा गुणा, आसा वा। एतद्–से हिअअं। एतस्य हृदयम्, एतस्या वा। सिं गुणा। एषा गुणा, एतासा वा। पक्षे–तस्स। तेसि। ताण। इमस्स। इमस्सि। इमाण। एअस्स। एअस्सि। एआण। तदेतदोरमा सह से सि इति आदेश केचिदिच्छन्ति ॥

## एत्तोएत्ताहे ङसिनैतद ॥ ८५ ॥

त्विल्यनुवर्तते। एतदो ङसिना सह एत्तो एत्ताहे इत्यादेशौ तु भवत। एत्तो एत्ताहे आगओ। पक्षे–एआहिंतो एअत्तो एआओ एआहि एआउ एआ ॥

## थे डेल् ॥ ८६ ॥

एतद स्थाने रानुबन्धे थकारे परे डानुबन्धो लानुबन्धश्च एत् भवति। एत्थ ॥

## एतो म्मावदितौ वा ॥ ८७ ॥

सप्तम्येकवचनादेशे म्मौ परे एतद एकारस्य अ इ इत्यादेशौ वा भवत। अअम्मि, इइम्मि। पक्षे—एअम्मि ॥

## सुनैसइणमोइण ॥ ८८ ॥

एतद् सुना सह एस इणमो इण इत्यादेशा वा भवन्ति । एस सहाओ च्चिअ ससहरस्स । एष स्वभाव एव शशधरस्य । एस गई । एषा गति । सव्वस्स वि एस गई । सर्वस्याप्येषा गति । एस सर । एतच्छिर । इणमो । इण । पक्षे-एसा । एओ । एअ ॥

## तस्सौ सोऽक्लीबे तदश्च ॥ ८९ ॥

तदश्चकारादेतदश्च तकारस्य सौ परे सकारो भवति, अक्लीबे अनपुसके । सो पुरिसो । सा महिला । एसो पिओ । एसा पिआ । एसा मुद्धा । सौ इत्येव ते, एए चिट्ठति । ताओ, एआओ महिलाओ । अक्लीब इति किम् ? त, एअ वण ॥

## सुप्यदसोऽमु ॥ ९० ॥

अदसः स्थाने सुपि परे अमु इत्यादेशो भवति । अमू पुरिसो । अमुणो पुरिसा । अमु वण । अमूइ वणाइ । अमू महिला । अमूओ महिलाओ । टा-अमुणा । अमूहि । ङसि-अमूहिंतो अमूओ अमूहि अमूउ अमुत्तो । भ्यस्-अमूहिंतो अमूसुंतो । ङस्-अमुणो अमुस्स । आम्-अमूण । ङि-अमुम्मि । सुप्-अमूसु ॥

## अहद्वा सुना ॥ ९१ ॥

अदस सुना सह अहदित्यादेशो भवति तु । तकारस्तावन्मात्रदर्शनार्थं, तेन स्त्रियामात्व न भवति । अह पुरिसो । अह महिला । अह वण । अह णे हसइ हिअएण मारुअतणओ । असावस्मान् हसति हृदयेन मारुततनय । पक्षे—अमू पुरिसो । अमू महिला । अमुं वण ॥

## इआऔ म्मौ ॥ ९२ ॥

अदसो ङिद्वचनादेशे म्मौ परे इअ अअ इत्यादेशौ तु भवत । इअम्मि । अअम्मि ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ द्वितीयाध्यायस्य द्वितीय पाद

## युष्मत्सुना तुवतुतुमतुह ॥ १ ॥

युष्मच्छब्द सुना सहित तुव तु तुम तुह इत्यादेशाश्चतुर प्राप्नोति। तुव तुं तुम तुह दिट्ठोसि। त-इति तु त्वामित्यस्य सिद्धावस्थाया वलोपे ह्रस्वे च ॥

## अमा तुमेतुए च ॥ २ ॥

युष्मदित्यनुवर्तते। युष्मच्छब्दोऽमा सह तुमे तुए इत्येतौ चकारात्तवमादि चतुष्टय चापद्यते। तुमे तुए। पक्षे-तुव तु तुम तुह वदामि ॥

## जसा भेतुब्भेतुय्हेउय्हेतुब्भ ॥ ३ ॥

युष्मच्छब्दो जसा सह भे तुब्भे तुय्हे उय्हे तुब्भ इति पञ्चादेशानापद्यते। भे तुब्भे तुय्हे उय्हे तुब्भ चिट्ठ वा भोम्ह। 'वा ब्भो म्हज्झा'विति वचनात् तुम्हे तुज्झे तुम्ह तुज्झ इति नव रूपाणि ॥

## शसा वो च ॥ ४ ॥

युष्मच्छब्द शसा सह वो इति चकारात् भे इत्यादींश्चादेशानापद्यते। वो भे तुब्भे तुय्हे उय्हे तुब्भ तुम्हे तुज्झे तुम्ह तुज्झ इति दश रूपाणि ॥

## टा भेतेदेदितुमतुमइ ॥ ५ ॥

युष्मत् टावचनेन सह भे ते दे दि तुम तुमइ इति षडादेशानापद्यते। भे ते दे दि तुम तुमइ कअ ॥

## ङिटाभ्या तुमएतुइतुएतुमाइतुमे ॥ ६ ॥

युष्मद् ङिटाभ्या सह तुमए तुइ तुए तुमाइ तुमे इति पञ्च रूपाण्याप्नोति। तुमए तुइ तुए तुमाइ तुमे ठिअ कअ वा ॥

## तुब्भतुहिंतोतुय्ह ङसिना ॥ ७ ॥

युष्मत् ङसिना सह तुब्भ तुहिंतो तुय्ह इति त्रीणि रूपाण्यापद्यते। तुब्भ तुहिंतो तुय्ह आगओ वा। 'वा ब्भो म्हज्झा'विति वचनात् तुम्ह तुज्झ इति पञ्च रूपाणि ॥

## तुतुइ ङिपूङसौ ॥ ८ ॥

ङिप् सप्तमीविभक्ति, ङसि पञ्चम्येकवचनम्, तयो परयोर्युष्मच्छब्दो यथासख्य तु तुइ इत्येतावादेशौ वापद्यते । सप्तमीङस्योर्यथाप्राप्तमेव । सप्तम्या तु तुम्मि तुसु । ङसौ—तुइ तुइत्तो तुईहिंतो तुईओ तुईउ आगओ ॥

## तुवतुमतुहतुब्भ ॥ ९ ॥

ङिप्ङसावित्यनुवर्तते । ङिपि ङसौ च परे युष्मद् तुव तुम तुह तुब्भ इति चत्वारि रूपाण्यापद्यते । ङिप्ङस्योर्यथाप्राप्तमेव । ङि–तुवम्मि तुमम्मि तुहम्मि तुब्भम्मि । 'वा ब्भो म्हज्झा'विति वचनात् तुम्हम्मि तुज्झम्मि । सुपि–तुवेसु तुमेसु तुहेसु तुब्भेसु तुम्हेसु तुज्झेसु ठिअ । 'क्त्वासुपोस्तु सुणा'वित्यनुस्वारे तुवेसु इत्यादि । ङसौ–तुवाहिंतो तुमाहिंता तुहाहिंतो तुब्भाहिंतो । 'वा ब्भो म्हज्झा'विति वचनात् तुम्हाहिंतो तुज्झाहिंतो । एव तुवत्तो तुमत्तो तुहत्तो तुब्भत्तो तुम्हत्तो तुज्झत्तो इति । दोदुहिंतसुतेष्वप्युदाहार्यम् । त्तो इति तु त्वत्त इत्यस्य वलोपे ॥

## भिसा भेतुब्भेहिउब्भेहिउय्हेहितुय्हेहि ॥ १० ॥

युष्मद् भिसा सह भे तुब्भेहि उब्भेहि उय्हेहि तुय्हेहि इति पञ्च रूपाण्यापद्यते । भे तुब्भेहि उब्भेहि उय्हेहि तुय्हेहि कअ । 'वा ब्भो म्हज्झा'विति वचनात् तुम्हेहि तुज्झेहि उम्हेहि उज्झेहि । एव नव रूपाणि ॥

## उम्होय्हतुय्हतुब्भ भ्यसि ॥ ११ ॥

भ्यसि परे युष्मद् उम्ह उय्ह तुय्ह तुब्भ इति चत्वारि रूपाण्यापद्यते । भ्यस स्तु यथाप्राप्तमेव । उम्हाहिंतो उय्हाहिंतो तुय्हाहिंतो तुब्भाहिंतो आगओ । 'वा ब्भो म्हज्झा'विति वचनात् तुम्हाहिंतो तुज्झाहिंतो । उम्हत्तो उय्हत्तो तुय्हत्तो तुब्भत्तो तुम्हत्तो तुज्झत्तो इत्यादि । एव दोदुहितसुतेष्वप्युदाहार्यम् ॥

## तुब्भोब्भोय्हतइतुहतुहतुम्हतुवतुमतुमेतुमाइतुमोदे-तेदितुइए ङसा ॥ १२ ॥

युष्मद् ङसा सह तुब्भ उब्भ उय्ह तइ तुह तुह तुम्ह तुव तुम तुमे तुमाइ

तुमो दे ते दि तु इ ए इत्यष्टादशादेशानापद्यते । 'वा भ्भो म्हज्झा'विति वचनात् तुम्ह तुज्झ उम्ह उज्झ इति द्वाविंशतिरूपाणि ॥

## तुम्हाणतुब्भतुब्भाणतुमाणतुवाणतुहाण-तुब्भवोभेत्वाऽऽमा ॥ १३ ॥

युष्मद् आमा सह तुम्हाण तुब्भ तुब्भाण तुमाण तुवाण तुहाण तुब्भ वो भे त्वा इति दशादेशानापद्यते । तुम्हाण तुब्भ 'वा भ्भो म्हज्झा'विति वचनात् तुम्हं तुज्झ तुब्भाण तुम्हाण तुज्झाण तुब्भ तुम्ह तुज्झ । 'क्त्वासुपो स्तु सुणा'वित्यनुस्वारे तुम्हाण तुब्भाण तुम्हाण तुज्झाण तुमाण तुवाण तुहाण । एवं त्रयोविंशतिरूपाणि ॥

## वा भ्भो म्हज्झौ ॥ १४ ॥

युष्मदादेशसम्बन्धिनो द्विरुक्तस्य भकारस्य ह्म ज्झ इत्यादेशौ वा भवत । तच्च यथास्थानमुदाहृतमेव ॥

## अस्मत्सुना अम्हिहमहअमहमहम्म्यम्मि ॥ १५ ॥

अस्मच्छब्द सुना प्रथमैकवचनेन सह अम्हि हं अहअ अह अहम्मि अम्मि इति षडादेशानाप्नोति । अम्हि करेमि अहं करोमि । तेण हं दिट्ठो तेनाहं दृष्ट । अहअ जम्पामि अहं कथयामि । अह गमिस्स अहं गमिष्यामि । अज्ज अहम्मि हासिआ अद्याहं हासिता । न अम्मि कुविआ नाहं कुपिता ॥

## मोभेवअ जसा ॥ १६ ॥

अस्मदित्यनुवर्तते । जसा सहाऽस्मच्छब्द मो भे वअ इति त्रीनादेशा नापद्यते । मो भणामो इत्यादि ॥

## अम्हेअम्होअम्ह ॥ १७ ॥

अस्मत् जसा सह अम्हे अम्हो अम्ह इति त्रीनादेशानापद्यते । योगविभाग उत्तरार्थं । अम्हे इत्यादि ॥

## णे च शसा ॥ १८ ॥

शसा सहाऽस्मच्छब्द णे इति चकारात् अम्हे इत्यादि त्रीनादेशाश्चा पद्यते । णे अम्हे पेच्छ इत्यादि ॥

## मणेणमिमिममममम्यहमम्हाम्ह अमा ॥ १९ ॥

अस्मदमा सह म णे ण मि मिम मम अम्मि अह मम्ह अम्ह इति दशादेशानापद्यते । म पेच्छ इत्यादि ॥

## मिमइममाइमएमे ङिटा ॥ २० ॥

ङिवचनेन टावचनेन सहाऽस्मद् मि मइ ममाइ मए मे इति पञ्चादेशा नापद्यते । मि ठिअ कअ वा इत्यादि ॥

## ममणेमआइममए टा ॥ २१ ॥

टावचनेन सहाऽस्मद् मम णे मआइ ममए इति चतुर आदेशानापद्यते । मम कअ इत्यादि ॥

## णेऽम्हेह्यम्हाह्यम्हेऽम्ह भिसा ॥ २२ ॥

भिसा सहाऽस्मद् णे अम्हेहि अम्हाहि अम्हे अम्ह इति पञ्चादेशानापद्यते । णे कअ इत्यादि ॥

## मइममहमज्झ ङसौ ॥ २३ ॥

ङसौ पञ्चम्येकवचने परेऽस्मद् मइ मम मह मज्झ इति चतुर आदेशा नापद्यते । ङसेस्तु यथाप्राप्तमेव । मईहिंतो मइत्तो मईओ मईउ । एव ममा हिंतो ममत्तो ममाओ ममाउ ममाहि ममा । एवं महाहिंतो महत्तो मज्झा हिंतो मज्झत्तो । इत्यादि ॥

## अह्ममम भ्यसि ॥ २४ ॥

भ्यसि पञ्चमीबहुवचने परेऽस्मद् अह्म मम इत्यादेशावापद्यते । अम्हा-हिंतो अम्हेहिता अम्हत्तो अम्हाओ अम्हाउ अम्हासुतो अम्हेसुतो अम्हाहि अम्हेहिं ममाहिंतो ममेहिंतो ममत्तो ममाओ ममाउ ममासुतो ममाहि ॥

## अम्हमज्झंमज्झमइमहमहमे च ङसा ॥ २५ ॥

ङसा सह अस्मच्छब्द अम्ह मज्झ मज्झ मइ मह मह मे इति सप्तादेशान्

चकारात् अम्हममौ चापद्यते । अम्ह इत्यादि ॥

अम्हेअम्होअम्हाणममाणमहाणमज्झाण-

मज्झाह्माह्मणेणो आमा ॥ २६ ॥

आमा सह अस्मत् अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झा अम्ह अम्हं णे णो इति एकादशादेशानाप्नोति । अम्हे धण इत्यादि । 'क्त्वा-सुपोस्तु सुणा'दित्यनुस्वारे–अम्हाणं । एवं पञ्चदश रूपाणि ॥

अम्हममज्झमह ङिपि ॥ २७ ॥

सप्तमीविभक्तौ परतः अस्मद् अम्ह मम मज्झ मह इति चतुर आदेशा नापद्यते । ङिपो यथाप्राप्तमेव । ङि–अम्हम्मि ममम्मि मज्झम्मि महम्मि । सुप् अम्हेसु ममेसु मज्झेसु महेसु । एत्वविकल्पमते–अम्हसु ममसु मज्झसु महसु । आत्वमपीच्छन्त्यन्ये–अम्हासु ममासु मज्झासु महासु । 'क्त्वासुपोस्तु सुणा' दित्यनुस्वारे–अम्हेसुं ममेसुं मज्झेसुं महेसुं। अम्हसुं ममसुं मज्झसुं महसुं अह्मासुं ममासुं मज्झासुं महासुं। एवमष्टादशरूपाणि ॥

चतुरो जश्शस्भ्यां चउरोचत्तारोचत्तारि ॥ २८ ॥

चतु शब्दस्य जस्शस्भ्यां सह चउरो चत्तारो चत्तारि इति त्रय आदेशा भवन्ति । चउरो चत्तारो चत्तारि चिट्ठन्ति पेच्छ वा ॥

तिण्णि त्रेः ॥ २९ ॥

जश्शस्भ्यामिति वर्तते । त्रिशब्दस्य जस्शस्भ्यां सह तिण्णि इत्यादेशो भवति । तिण्णि पुरिसा महिला वणाणि वा चिट्ठन्ति पेच्छ वा ॥

दोण्णिदुवेवेण्णि द्वेः ॥ ३० ॥

द्विशब्दस्य जस्शस्भ्यां सह दोण्णि दुवे वेण्णि इति त्रय आदेशा भवन्ति । दोण्णि दुवे वेण्णि महिला चिट्ठन्ति पेच्छ वा । 'संयोग'इति ह्रस्वे दुण्णि विण्णि ॥

दोवे टादौ च ॥ ३१ ॥

द्वेरिति वर्तते । द्विशब्दस्य टादौ तृतीयादौ विभक्तौ परतः दो वे इत्यादेशौ

भवत , चकारात् जस्शस्भ्या सहितस्य च । दोहिं वेहि कअ । दोहिंतो वेहिंतो आगओ । दोरण वेरण धण । दोसु वेसु ठिअ । जस्शस्भ्या दो वे ठिआ पेच्छ वा ॥

## ति त्रेः ॥ ३२ ॥

टादावित्यनुवर्तते । त्रिशब्दस्य टादौ परे ति इत्यादेशो भवति । ति कअ त्रिभि कृत तिसृभिर्वा । तिहिंतो आअओ त्रिभ्य तिसभ्यो वा आगत । तिण धण त्रयाणा तिसृणा वा धनम् । तिसु ठिअ त्रिषु तिसृषु वा स्थितम् ॥

## ह्ण सख्याया आमोऽविंशतिगे ॥ ३३ ॥

सख्याशब्दात्परस्याम ह्ण ह्ण इत्यादेशौ भवत , अविशतिगे विंशत्यादीन् वर्जयित्वा । दोह्ण तिह्ण दोह्ण तिह्ण । चउह्ण चउह्ण । पचह्ण पचह्ण । छह्ण छह्ण । सत्तह्ण सत्तह्ण । अठह्ण अठह्ण । णवह्ण णवह्ण । दसह्ण दसह्ण । पण्हारह्ण पण्हारह्ण । अठ्ठारह्ण अठ्ठारह्ण । कइह्ण कइह्ण कतीनाम् । अविंशतिगे इति किम् ? विसाण । तिसाणं ॥

## द्विवचनस्य बहुवचनम् ॥ ३४ ॥

सर्वासा विभक्तीना स्वादीना तिङादीना च द्विवचनस्य स्थाने बहुवचनं भवति । दोण्णि कुणंति द्वौ कुरुत । दोहिं । दोसुतो । दोह्ण । दोसु । दो पाआ द्वौ पादौ । दोण्णि हत्था द्वौ हस्तौ । दुवे णअणा द्वे नयने । वेण्णि कण्णा द्वौ कर्णौ ॥

## ङेसो ङम् ॥ ३५ ॥

ङेस् चतुर्थीविभक्ति , ङम् षष्ठीविभक्ति । ङेस स्थाने ङम् भवति । मुणिस्स, मुणीण भोअण देहि । णमो देवस्स, देवाणं ॥

## तादर्थ्ये ङेस्तु ॥ ३६ ॥

तादर्थ्ये विहितस्य ङे चतुर्थ्येकवचनस्य स्थाने ङम् षष्ठी तु भवति । देवस्स देवाअ देवार्थमित्यर्थ । ङेरिति किम् ? देवाणं ॥

## वधात् डाइ च ॥ ३७ ॥

त्वित्यनुवर्तते । वधशब्दात् परस्य ङे स्थाने डित् आइ इत्यादेश षष्ठी चतुर्थी च भवति । वहाइ वहस्स वधाय । वधार्थमित्यर्थ ॥

## क्वचिद्साादे ॥ ३८ ॥

अस् द्वितीयाविभक्ति । असादीना विभक्तीना स्थाने षष्ठीविभक्ति क्वचिद्भवति । सिरिमधरस्स वदे श्रीम थर वन्दे । तेस्स मुहस्स सरिमो तस्या मुख स्मराम । अत्र द्वितीयाया । धणस्स लद्ध धनेन लब्धम् । तेहि एस आइएण तैरेतदाचीर्णम् । अत्र तृतीयाया । चोरस्स भिहइ चोराद्बिभेति । इमाए पाओतसहिआए इअराइ लहुअक्खराइति । एभ्य पादा त सहितेभ्य इतराणि लघ्वक्षराणीति । अत्र पञ्चम्या । वणसिरिवट्ठिए कबरीव्व वनश्रीपृष्ठे कबरीव । अत्र सप्तम्या ॥

## असूटासोर्ङिप् ॥ ३९ ॥

अस् द्वितीया, टास् तृतीया, तयो स्थाने ङिप् सप्तमी क्वचिद्भवति तु । गामे वहामि । णअरे णजामि । ग्राम वहामि । नगर नयामि । अत्र द्वितीयाया । तेसु अलकआ पुहवी । तैरलङ्कृता पृथिवी । अत्र तृतीयाया ॥

## ङसिसष्टाश्च ॥ ४० ॥

ङसिस पञ्चम्या स्थाने टास् तृतीया चकारात् सप्तमी च क्वचिद्भवति । चोरेण भिहइ चोराद्बिभेति । अतेउर रमिअ आगओ अन्त पुराद्रन्त्वागत ॥

## ङिपोऽस् ॥ ४१ ॥

ङिप सप्तम्या स्थाने अस् द्वितीया क्वचिद्भवति । विज्जुज्जोअ भरइ रई विद्युद्द्याते स्मरति रतिम् ॥

## लुक् क्यङोर्यस्य तु ॥ ४२ ॥

क्यङ तस्य द्विवचनात् षष्ठ्यन्तस्य च सम्बन्धिनो यस्य लुग् भवति तु । गुरूअइ गुरूइ । अगुरुर्गुरुर्भवति, गुरुरिवाचरति वा क्यङ् । धमधमाअइ धमधमाइ । लोहिआअइ लोहिआइ ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ द्वितीयस्याध्यायस्य तृतीय पाद ॥

## लटस्तिताविजेंच् ॥ १ ॥

लट् वर्तमान तत्सम्बन्धिन प्रथमपुरुषस्य एकत्वे वर्तमानौ यौ परस्मैपदा त्मनेपदत्वेन विहितौ तिप् तङ् इत्येतौ प्रत्येकम् इच् एच् च इत्येतौ भवत । चकारौ 'हुरचिति' इति विशेषणार्थौ । हसइ हसए । रमइ रमए ॥

## सिप्थास्सेसि ॥ २ ॥

लट इत्यनुवर्तते । परस्मैपदात्मनेपदयोर्मध्यमपुरुषस्य एकत्वे वर्तमानौ सिप् थास् इत्येतौ प्रत्यक से सि इत्येतौ तु भवत । हससे हससि । रमसे रमसि ॥

## मिर्मिबिटौ ॥ ३ ॥

लट परस्मैपदात्मनेपदोत्तमपुरुषैकवचनत्वे वर्तमानौ मिप् इट् इत्येतौ प्रत्येक मि इति भवत । हसामि । रमामि । बहुलाधिकारात् मिबिटोरादेशस्य मेरिकारस्य लोपश्च । बहु वण्णिउ ण सक्क बहु वर्णितुं न शक्नोमि । ण मर न म्रिये ॥

## झिझौ न्तिन्तेइरे ॥ ४ ॥

लट प्रथमपुरुषस्य बहुत्वे वर्तमानौ झि झ इत्येतौ प्रत्येक न्ति न्ते इरे इति त्रीनादेशानापद्येते । हसन्ति हसन्ते । रमन्ति रमन्ते । हसिज्जन्ति हसिज्जन्ते । रमिज्जन्ति रमिज्जन्ते । गज्जन्ते खे मेहा, उव्वज्जन्ते कइ हिअअसाअरे कव्वरअणाइ । हुप्पिरे बाहू प्रभवतो बाहू । क्वचिदेकत्वे इरे—सूसइरे ताण तारिसो कठो शुष्यति तासा तादृश कण्ठ ॥

## थध्वमित्थाहचौ ॥ ५ ॥

लटो मध्यमपुरुषबहुत्वे वर्तमानौ थ ध्वम् इत्येतौ प्रत्येकम् इत्था हच् इत्या देशावापद्येते । हसित्था हसह । रमित्था रमह । बहुलाधिकारादित्थाऽन्यत्रापि— ज ते रोइत्था यत्ते रोचते । हजिति चकार 'इह हचो'रिति विशेषणार्थ ॥

## मोममु मस्महिङ् ॥ ६ ॥

लट उत्तमपुरुषबहुत्वे वर्तमानौ मस् महिङ् इत्येतौ प्रत्येक मो म मु इति त्रीनादेशानापद्येते । हसामो हसाम हसामु । रमामो रमाम रमामु ॥

## अत एवैच्से ॥ ७ ॥

लट प्रथमपुरुषस्य एकत्वे य एच्, यश्च मध्यमपुरुषैकत्वे विहित से तौ अकारान्तादेव भवत, नान्यस्मात्। हसए हससे। तुवरए तुवरसे। करए करसे। अत इति किम्? ठाइ ठासि। वसुआइ वसुआसि। होइ होसि ॥

## त्वस्तेर्ह्मह्मोम्हि ममोमिना ॥ ८ ॥

अस्तेर्धातो स्थाने म मो मि इत्येतै सह यथासंख्य म्ह म्हो म्हि इत्यादेशा भवन्ति तु। गअह्म गअह्मो गअह्मि गता स्म। एसह्मि एषोऽस्मि। मुकारस्या ग्रहणादप्रयोग एव तस्येत्यवसीयते। पक्षे—अत्थि अह्मो। अत्थि अह् ॥

## सिना स्सि ॥ ९ ॥

अस्तेरित्यनुवर्तते। अस्तेर्धातो सिना मध्यमपुरुषैकवचनादेशेन सह सि इत्यादेशो सिर्भवति। णिठ्ठुरो ज सि निष्ठुरो यदसि। सिनेति किम्? से-आदेशे सति—अत्थि तुम ॥

## तिङात्थि ॥ १० ॥

अस्तेरितङा तिबादिना सह अत्थि इत्यादेशो भवति। अत्थि सो। अत्थि ते। अत्थि तुम। अत्थि तुम्हे। अत्थि अह। अत्थि अम्हे ॥

## णिजदेदावावे ॥ ११ ॥

धातो प्रेरणार्थे विहितो यो णिच्प्रत्यय स अत् एत् आव आवे इति चतुर आदेशानाप्नोति। तकारस्तावन्मात्रत्वदर्शनार्थ। अत्-दरिसइ। एत्-कारेइ। आव—कारावइ। आवे-कारावेइ। हासावइ हासाइ हासावेइ हासेइ। उवसमावइ उवसमेइ। बहुलाधिकारात् कचिन्नास्ति-जाणइ जाणावइ जाणावेइ। कचिदावेर्नास्ति-यावइ यावेइ यावाइ ॥

## शुष्यादेरविर्वा ॥ १२ ॥

णिजित्यनुवर्तते। शुष्यादिणिच अवि इति वा भवति। शोषित सोसाविअ सोसिअ। तोषित तोसाविअं तोसिअं ॥

## भ्रमेराड ॥ १३ ॥

विस्सुओ, अविहिओ उन्मत्त । परिक्खाइअअ परिक्षीणम् । छिक्क, पिलुअ क्षुतम् । पविग्घ विस्मृतम् । अज्झसिअ, अवडाहिअ, उक्कोस उत्कृष्टम् । हल्लपविअ त्वरितम् । उद्दारिअ उत्खातम् । अट्टट्टो यात । उल्लिक्क दुश्चेष्टितम । उच्छड्डिअं मुषितम् । ऊगिअ, पठिअ मिअ अलङ्कृतम् । उक्किअ प्रसृतम् गत्तो, ल्हिक्को, सत्तो गत । खसिअ विच्छुरिअ । पडिहत्थ अपूर्वम् । णिज्जर जीर्णं, खिन्नं च । उब्बलो, उप्पलो, उव्वालो, अजडिओ, उत्तत्तो अध्यासितम् । ओइल्लअ, उपकुड्ड विप्रलब्ध । उद्दच्छो लिप्तम् । छूहिअ, पार्श्वपरावृत्तम । अणग्गपहट्टं पुनरुक्तम् । अणासिअ आस्तृतम् । उप्पड्डिअ अनष्टम् । अणहवणअ भर्त्सितम् । उज्झरिओ, उग्घओ, विमइओ, मइओ, पइओ विस्तीर्णं । कुद्दो, वामो, अवगदो, पइण्णो, घुत्तो आक्रान्तम् । ओक्खलिअ, ओरपिअ, उवस्खडिअ त्रुटित खण्डितमित्यर्थं । अण्ण, कव्वरिअ आरोपितम् । अहविओ चूर्णितम् । उल्लुट्ठिअ, दुहअ, उत्थिअ, उक्कासिअ, ओदरिअ रणलब्धम् । ओमहिअ पुरस्कृतम् । वक्खलिअ उत्सङ्गितम् । उअङ्किअ पुञ्जीकृतम । पिण्डइअ ऽशातम । उल्लुहुडिअ हेषिअ, हेक्किअ, हिसमण उन्नतम्, उत्तम, चुम्बित च । मुम्मिअ, मुह्लिअ शीलितम् । महुरालिअ णिस्सिमिओ निर्वासित । विक्खिण्णो अवकीर्णं । णिरित्तो नृत्त । गुम्मुओ मूलोत्पन्नम् । णिरुत्तं निश्चितम् । पक्कड्डिअ प्रस्फुरितम् । ओणिडओ मद्यासक्त (१) । वेट्ठिओ वेष्टित । वोरिणो अतिक्रान्त । जणिम्मिओ स्थापित । लक्खओ, मिओ विघटित । णिव्वणिओ जलधौत । चक्खिअ आस्वादितम् । तुत्थअ रञ्जितम् । किक्किअ (२)आक्षिप्तम् । परट्टो भीत, पतित, पीडितश्च । पडिअग्गिअ वर्धापित, परिभुक्त च । उच्छुल्लो विधारित । णिडिओ वञ्चित । छूसक्किओ, सग्गओ, पुसुलो मुक्त । मुमिलो मूढ, स्खलित, आपूर्णश्च । संसाओ चूर्णित, भीत, आरूढ उद्विग्नश्च । उज्झसिअ । इत्यादि ॥

## धातवोऽर्थान्तरेष्वपि ॥ १३३ ॥

उक्तेभ्योऽर्थेभ्योऽर्थान्तरेष्वपि धातवो वर्तन्ते । वलि प्राणने पठित

---

( १ ) खंडिओ अभ्यासक्त —क० । ( २ ) रेक्किअं—क० ।

खादनेऽपि वर्तते-वलइ खादति, प्राणन करोति वा। एव कलि संख्याने सज्ञाने च—कलइ जानाति, सख्यान करोति वा। गिरिर्गतौ प्रवेशे च—गिरइ प्रविशति, गच्छति वा। काङ्क्षते पफआदेश प्राकृते—पंफइ इच्छति, खादति वा। पकते (?) थक्कआदेश -थक्कइ नीचा(१) गतिं करोति, विलम्बयति, वा। विलप्युपालम्भिसन्तपिनि श्वसा झंखादेश —झखइ विलपति, उपालभते, सन्तपति, नि श्वसिति वा । केचित् कैश्चिदुपसर्गैर्नित्यम्- पहरइ युध्यते। सहरइ सवृणोति। अणुहरइ सदृशी भवति। णिहरइ पुरीषोत्सर्गं करोति। विहरइ क्रीडति। आहरइ खादति। पडिहरइ पुन पूरयति। परिहरइ त्यजति। उपहरइ पूजयति। वाहरइ आह्वयति। पवसइ देशान्तर गच्छति। उन्छुवइ चोरयति। उल्लुहरइ निस्सरति ॥

इति श्रीत्रिविक्रमदेवविरचितव्याकरणवृत्तौ तृतीयाध्यायस्य प्रथम पाद ॥

## दस्तस्य शौरसेन्यामखावचोऽस्तोः ॥ १ ॥

शौरसेन्या भाषायामखौ अनादौ वर्तमानस्याच परस्य अस्तो असयुक्तस्य तकारस्य दकारो भवति। तदो पूरिदपडिण्णेण मारुदिणा मन्तिदो। एतस्मात् एदाहि। सततम् सदद। अखाविति किम्? तथा तहा करेथा तरइ। अच इति किम्? चिन्ता। मन्तिदं। अस्तोरिति किम्? मत्तो। अय्यउत्तो। असभाविदसक्कार। हला सउन्दले ॥

## सयोगेऽधः क्वचित् ॥ २ ॥

तस्येत्यनुवर्तते। शौरसेन्या सयोगे अधो वर्तमानस्य तस्य दकारो भवति, क्वचिल्लक्ष्यानुसारेण। महंदा। महंदो। अदेउर ॥

## तावति खोर्वा ॥ ३ ॥

शौरसेन्या तावच्छब्दे खो आदेस्तकारस्य दो वा भवति। दावा तावा॥

## थो धः ॥ ४ ॥

वेत्यनुवर्तते। शौरसे या थस्य धो वा भवति। कधेति कहेति कथयति। कधं कहं कथम्। पिध पिह पृथक्। कधा कहा कथा। अखावित्येव—

( १ ) निर्जा—ख० ।

थाम। थेव। अच इत्येव—किंथा। अखोरित्येव—तित्थ तीर्थम्॥

## इहहचोर्हस्य ॥ ५ ॥

शौरसेन्यामिहशब्दस्य 'थध्वमित्थाहचौ' इति विहितस्य हच्प्रत्ययस्य च हकारस्य धकारो वा भवति। इध इह। होध होह। परित्ताअध परित्ताअह॥

## भुवो भः ॥ ६ ॥

हस्येत्यनुवर्तते। शौरसेन्या भुवादेशस्य हकारस्य भकारो वा भवति। भोदि, होदि, भुवदि, हुवदि भवति॥

## अन्त्यादिदेति मो णः ॥ ७ ॥

शौरसेन्यामन्त्यान् मकारात् परो णकारागमो वा भवति, इदेति इकारे एकारे च परे। जुत्तंणिम जुत्तमिण युक्तमिदम्। सरिसणिम सरिसमिण सदृशमिदम्। किंणेद किमेद किमेतत्। एवणेद एवमेद एवमेतत्॥

## र्यो य्य ॥ ८ ॥

शौरसेन्या र्यस्य स्थाने य्य इत्यय वा भवति। अय्यउत्तो। पय्याउली किदम्हि। सुय्यो। कय्यपरवसो। पक्षे—अज्जउत्तो। पज्जाउलीकिदम्हि। सुज्जो। कज्जपरवसो॥

## पूर्वस्य पुरवः ॥ ९ ॥

शौरसन्या पूर्वशब्दस्य पुरव इत्यादेशो वा भवति। पुरवमेद। पक्षे—पुव्वमेद॥

## इअदूणौ क्त्वः ॥ १० ॥

शौरसेन्या क्त्वाप्रत्ययस्य इअ दूण इत्यादेशौ वा भवत। भविअ होदूण। पढिअ पढिदूण। रमिअ रमिदूण। होत्ता भोत्ता पठिता रता इति सिद्धावस्थाया वलोपे॥

## कृगमोडेदुअः ॥ ११ ॥

कृञ् गम् इत्याभ्या परस्य क्त्वाप्रत्ययस्य डित् अदुअ इत्यादेशो वा भवति। कदुअ। गदुअ। करिअ। गमिअ। करिदूण। गमिदूण॥

## इदानीमो ल्दाणिं ॥ १२ ॥

शौरसेन्यामिदानीम स्थाने दाणिं इत्यादेशो लिद् भवति। लित्वान्न विकल्प । अनन्तरकरणिज्ज दाणिं आणवेदु अय्यो। 'तद्वत्यत्ययश्चे'ति सूत्रात् प्राकृतेऽपि-अणन्तर दाणिं होइ ॥

## तस्मात्ता ॥ १३ ॥

शौरसेन्या तस्माच्छब्द ता इत्यादेशमापद्यते। ता जाव पविसामि। ता अल एदिणा माणेण ॥

## ण नन्वर्थे ॥ १४ ॥

शौरसे या न वर्थे ण इति निपात प्रयोक्तव्य । ण अफलोदआ । ण अय्य मिस्सेहिं पढम एव्व आणत्त । ण भव मे अग्गदो चलदि ॥

## अम्हहे हर्षे ॥ १५ ॥

शौरसेन्याम् अम्हहे इति निपातो हर्षे प्रयोज्य । अम्हहे इदाए उम्मिलाए सुपरिघडिदो भव ॥

## हीही वैदूषके ॥ १६ ॥

शौरसेन्या विदूषकसम्बन्धिनि हर्षे हीही इति निपात प्रयोक्तव्य । हीही सपण्णा मणोरहा पिअवअस्सस्स ॥

## हीमाणहे निर्वेदविस्मये ॥ १७ ॥

शौरसेन्या हीमाणहे इति निपात निर्वेदे विस्मये च प्रयोक्तव्य । निर्वेदे-हीमाणहे परिस्संता अम्हे एदेण णिअविहिणो दुव्विलसिदेण। परिश्रान्ता वय मेतेन निजविधेर्दुर्विलसितेन । विस्मये-हीमाणहे जीवतवच्छा मे जणणी ॥

## एवार्थे एव्व ॥ १८ ॥

शौरसेन्यामेवार्थे एव्व इति निपात प्रयोज्य । मह एव्व भणतस्स सो एव्व वेसो ॥

## हञ्जे चेट्याह्वाने ॥ १९ ॥

शौरसे या हजे इति निपात चेट्याह्वाने प्रयोज्य । हजे चदुरिए ॥

अतो ङसेर्दुदोश् ॥ २० ॥

शौरसे यामकारात् परस्य ङसे दु दा इत्येतौ शितौ भवत । दूराद्दु, दूरादो एव्व ॥

आत् सावामन्त्र्य इनो नः ॥ २१ ॥

शौरसे यामिनो नकारस्य आमन्त्र्ये सौ परे आत्व वा भवति। हे कञ्चुइआ हे कञ्चुकिन् । हे तपस्सिआ । हे मणस्सिआ ॥

म ॥ २२ ॥

शौरसे यामामन्त्र्ये सौपरे नकारस्य मकारो वा भवति । हे राअ । हे पिअ वम । भअव कुसुमाउह । पक्षे-सअलोअ अहिभवन् हुदवह ॥

भवताम् ॥ २३ ॥

आमन्त्र्येति निवृत्तम् । शौरसे या भवत्प्रकाराणा सौ परे नकारस्य मो भवति । किं भव हिअएण चिंतेदि । किं भवान् हृदयेन चिन्तयति । एदु भव, पज्जलिदो भअव हुदासणो । एतु भवाम्, प्रज्वलितो भगवान् हुताशन । मघव पाअसासणो । मघवान् पाकशासन । कअव, करोमि, काहु च । कृतवान्, करोमि, करिष्यामि च ॥

भविष्यति स्सि ॥ २४ ॥

शौरसे या भविष्यदर्थे विहिते प्रत्यये परे स्सि इति भवति । हिस्सादीना मपवाद । भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥

इजेचोर्दट् ॥ २५ ॥

लग्स्तिप्ताविजेच्'इति वर्तमाने प्रथमपुरुषैकवचनस्थाने विहितयोरिजेचो र्दकारागमो भवति । टित्त्वादनुक्त न्यायेनाऽऽद्ये । रमदि रमदे । हसदि हसदे । गच्छदि गच्छदे । होदि । देदि । णेदि ॥

शेष प्राकृतवत ॥ २६ ॥

शौरसेन्यामिह प्रकरणे यत्कार्यमुक्तं ततोऽन्यत् प्राकृतवदेव भवति । 'दिह्नौ मिथ से'रित्यारभ्य 'दस्तस्य शौरसेन्यामखावचोस्तो'रिति सूत्रात् प्राग् यानि सूत्राणि, तेषु यान्युदाहरणानि तानि तदवस्थान्येव शौरसेन्या भवन्तीति विभाग प्रतिसूत्रमभ्यूह्य दर्शनीय । यथा—अ तावेई । जुवईजणो । मणसिला । इत्यादि ॥

## मागध्या शौरसेनीवत् ॥ २७ ॥

शेषमिति वर्तते । मागध्या यद्वक्ष्यते ततोऽन्यच्छौरसेनीवद् द्रष्टव्यम् । तत्र 'दस्तस्य शौरसेन्यामखावचोस्तो'—पशीददु भावमिश्शे । 'सयोगेऽध कश्चित्'—अले किं एशे महदे कलकले किमेष महा कलकल । 'तावति खोवा'—माले दावा, मुचे दावा, ज दाव से आगमे । 'थो ध –'अले कुभालअ कथेहि । 'इहहचोर्हस्य'—ओशलध अय्या ओशलध । 'भुवो भ '–भोदि । 'अन्यादिदेति मो ण '—जुत्तणिम । शालिशणिम । 'र्यो य्य '—अय्य एशे खु कुमाले मलअकेदु । 'पूर्वस्य पुरव '—एशे पुरवे । 'इअदूणौ क्त्व '—कि खु शोहणे वम्हणे शेत्तिकलिअ लव जापदिग्गहे दिण्णे । 'कृगमोर्डदुअ '—कदुअ । गदुअ । 'इदानीमो दाणिं'—शुणध दाणिं, हगे शक्कावदालब्भतलवाशी धीवले । 'तस्मात्ता'—ता जाव उव विसामि । 'ण न वर्थे'—ण अवशलोपशप्पणीआ लाआणो शुणीअन्ते । 'अम्महे हर्षे'—अम्महे एदाए उम्मिलाए शुपलिघडिदे भव । 'हीही वैदूषके'—हीही भो संवाअणअरी एशा । 'हीमाणहे निर्वेदविस्मये'—निर्वेदे यथा राक्षस–हीमाणहे पलिश्शता हगे एदेण णिअविहिणो दुव्विलशिदेण । विस्मये यथा उदात्तराघवे राक्षस–हीमाणहे जीवतवच्छा मे जणणी । 'एवार्थे एव्व'—मए एव्व । 'हजे चेट्याह्वाने'—हजे चदुलिए । 'अतो ङसेर्दुदोशू–' हगे विआउला अणादो सुह पावेदि । 'आत्सावामन्त्र्य इनो न '–हे कचुइआ । 'म '–हे लाअ । 'भवताम्'–एदु भव शमले, भव महाबले । 'भविष्यति स्सि'–कहिं नु एदे लुहिलप्पिए भविश्शशि । 'इजेचोर्दद्' अम्हे चलम्ह पेक्खिकदु इदे एव्व आअच्छदि । अले किं एशे महदे कलकले शुणीअदि । 'शेष प्राकृतवत्'—मागध्यामपि 'दिह्नौ मिथ से '–इत्यारभ्य 'दस्तस्य शौरसेन्यामखावचोस्तो' इत्यस्य प्राक् यानि सूत्राणि तेषु यान्युदाहरणानि सन्ति तेषु मध्ये अमूनि

तद्वस्थान्येवेति विभाग स्वयमभ्यूह्य दर्शनीय ॥

## त्वाडाहो ङसः ॥ २८ ॥

मागध्यामित्यनुवर्तते । मागध्याम् आत् अवर्णात् परस्य ङस डित् आह इत्यादेशो भवति तु । हगे न एलिशाह कम्माह काली । अह न ईदृशस्य कर्मण कारी । भअदत्त शोणिदाह कुंभे । भगदत्त शोणितस्य कुम्भ । पक्षे—भीम-शेणश्श पश्चादो आहिण्डीअदि । हिडिंवाए कुडुम्बअशोकेण उपशमदि ॥

## आमो डाहङ् ॥ २९ ॥

मागध्यामवर्णात्परस्य आमो डाहादेशो ङिद्वा भवति । ङित्वात्सानुनासिक उकार । शअणाहँ सुख स्वजनाना सुखम् । पक्षे न डाहङ्—सअणाण । व्यत्ययात्प्राकृतेऽपि डाहङ्—तुम्हाहँ । अम्हाहँ । सरिसाहँ । कम्माहँ ॥

## सौ पुस्येलतः ॥ ३० ॥

मागध्या पुँल्लिङ्गे अकारस्य एकारो भवति सौ परे । लित्वान्न विकल्प । एष मेष एशे मेशे । एष पुरुष एशे पुलिशे । अत इति किम् ? निधि णिही । पुसीति किम् ? ज । जल ॥

## हगेऽहंवयमोः ॥ ३१ ॥

मागध्यामहंवयमो स्थाने हगे इत्यादेशो भवति । हगे शक्कावदालब्भतल वाशी धीवले । हगे शंपत्ता । वय सम्प्राप्ता ॥

## छोऽनादौ श्चः ॥ ३२ ॥

मागध्यामनादौ वर्तमानस्य छकारस्य शकाराक्रान्तचकारो भवति । गच्छ गच्छ गश्च गश्च । उच्छलति उश्चलदि । पिच्छिल पिश्चिलो । लाक्ष णिकस्यापि–आपन्नवत्सल आवण्णवच्छलो, आवण्णवश्चलो । तिर्यक् प्रेक्षते तिरिच्छि पेच्छइ, तिलिश्चि पेश्चिदि । अनादाविति किम् ? छाले ॥

## क्षः ᳵकः ॥ ३३ ॥

मागध्यामनादौ वर्तमानस्य क्षकारस्य जिह्वामूलीयाक्रान्तककारो भवति । यक्ष यᳵके । राक्षस लᳵकशो । अनादावित्येव-खले ॥

## स्क प्रेक्षाचक्षेः ॥ ३४ ॥

मागध्या प्रेक्षतेराचक्षतेश्च सकाराक्रान्त ककारो भवति । 'क्ष ㄨक' इत्य स्यापवाद । पेस्कदि । आअस्कदि ॥

## स सषोः सयोगेऽग्रीष्मे ॥ ३५ ॥

मागध्या सकारषकारयो सयोगे वर्तमानयो सकारो भवति, अग्रीष्मे ग्रीष्मशब्दे न भवति । ऊर्ध्वलोपाद्यपवाद । परस्खलदि हस्ती । बहस्पदी । मस्कली । विस्मये । ष —शुष्कदारु शुस्कदालु । कष्टम् कस्त । शष्पकवल शस्पकवले । धनुष्कुराड धनुस्कुड । अग्रीष्म इति किम् ? गिह्मवाशले ॥

## स्रोः श्लौ ॥ ३६ ॥

मागध्या स्रो सकाररेफयो शकारलकारौ यथासंख्य भवत । सम शुमे । हसः हशे । स्तुति शुदी । शोभन सोहण । र —नर नले । कर कले । उभये-सारस शालशे । पुरुष पुलिशे ॥

## न्यण्यज्ञञ्जां ञ्ञः ॥ ३७ ॥

मागध्या न्य ण्य ज्ञ ञ्ज इत्येषा ञ्ञ ञ्ञकारो भवति । रित्वात् द्वित्वम् । अभि मन्युकुमार अहिमञ्ञुकुमाले । कन्यका कञ्ञका । सामान्य शामञ्ञ । ण्य-पुण्यवान् पुञ्ञवते । अब्रह्मण्यम् अबम्हञ्ञ । ज्ञ-प्रज्ञा पञ्ञा । ञ्ज-अञ्जलि अञ्ञली । धनञ्जय धणञ्ञये । पातञ्जल पातञ्ञले ॥

## जो व्रजेः ॥ ३८ ॥

मागध्या व्रजतेर्जकारस्य ञ्ञः भवति । यस्यापवाद । वञ्ञदि । वञ्ञदे ॥

## जयद्या यः ॥ ३९ ॥

मागध्या जकारयकारद्यकाराणा यकारो भवति । ज—जानाति याणादि । जनपद यणपद । दुर्जन दुय्यणे । गर्जति गय्यति । य-याणवत्त यानपात्रम् । द्य-मद्य मय्य । अद्य किल विद्याधर आगतः अय्य किल विय्याहरे आअदे । यस्य वत्वविधानम् 'आदेर्ज' इत्यस्य बाधनार्थम् ॥

## ष्टट्टौ स्थम् ॥ ४० ॥

मागध्या षकाराक्रान्त ठकारो द्विरुक्त टकारश्च सकाराक्रान्त थकारमापद्यते। ष्ठ–शुस्थु कद सुष्ठु कृतम् । कोस्थागाल कोष्ठागारम् । ट्ट–पट्ट पस्थ । भस्थारिआ । भट्टारिका । भट्ट भस्थे । भट्टिनी भस्थिणी ।

## स्थर्थौ स्तम् ॥ ४१ ॥

मागध्या स्थ र्थ इत्येतौ सकाराक्रान्त तकारमापद्येते । स्थ–उवस्तिदे उप स्थित । शुस्तिदे सुस्थित । र्थ—अस्तवदी अर्थपति । शस्तवाहे सार्थवाह ॥

## चिट्ठस्तिष्ठस्य ॥ ४२ ॥

मागध्या स्थाधातोर्य तिष्ठ इत्यादेशस्तस्य चिट्ठ इत्यादेशो भवति । चिट्ठदि । चिट्ठदे ॥

## नो नणोः पैशाच्याम् ॥ ४३ ॥

पैशाच्या भाषाया नकारणकारयोर्नकारो भवति । पनमत पनयप्पकुवित प्रणमत प्रणयप्रकुपितम् । गुनगनजुत्तो गुणगणयुक्त । गुणेन गुनेन । नकारस्य नकारकरण णत्वबाधनार्थम् ॥

## न्यण्यज्ञा ञ्ञर् ॥ ४४ ॥

पैशाच्या न्य ण्य ज्ञ इत्येतेषा ञकारो भवति । रित्वाद् द्वित्वम् । न्य–कञ्ञका कन्यका । अभिमञ्ञू अभिमन्यु । ण्य—पुञ्ञकम्मो पुण्यकर्मा । पुञ्ञाह पुण्याहम् । ज्ञ—पञ्ञा प्रज्ञा । सव्वञ्ञो सर्वज्ञ । सञ्ञा सज्ञा । विञ्ञो विज्ञ । संञ्ञाण सज्ञानम् ॥

## राज्ञो ज्ञो वा चिञ् ॥ ४५ ॥

पैशाच्या राजन्शब्दसम्बन्धिनो ज्ञकारस्य चिञ् इत्यादेशो वा भवति । राचिञा लपित रञ्ञा लपित । राचिञो धन रञ्ञो धनं । ज्ञ इति किम् ? राजा ॥

## तल्तदोः ॥ ४६ ॥

पैशाच्या तकारदकारयोस्तकारो भवति । लित्वान्न विकल्प । त–भगवती

भअवती । सतत सततम् । द्-मतनपरवसो । तामोतरो । वतनक । मालातो मालातु । शिरीतो शिरीतु । तरीतो तरीतु । तरूतो तरूतु । वधूतो वधूतु । होतु । रमतु । तकारस्य तकारविधानमादेशान्तरबाधनार्थम् । तेन—पताका, वेतिसो इत्यादि सिद्ध भवति ॥

## शषोः सः ॥ ४७ ॥

पैशाच्या शकारषकारयो सो भवति । सोभन । ससी । सखो । सका । सक्को । ष—विसमो । किसनो कृष्ण । विसेसो । 'न प्रायो लुक्कादिच्छलुषट्—छम्यन्तसूत्रोक्त'मित्यस्य बाधकस्य बाधनार्थोऽस्य योग ॥

## लो ळः ॥ ४८ ॥

पैशाच्या लकारस्य ळकारो भवति । सीळ । कुळ । जळ । फळ । कमळ ॥

## दृस्तियादृशगे ॥ ४९ ॥

पैशाच्या यादृश इत्यादिषु दृश इत्यस्य स्थाने ति इत्यादेशा भवति । यातिसो यादृश । भवातिसो भवादृश । तातिसो तादृश । अह्मातिसो अस्मादृश । अन्व्यातिसो अन्यादृश । ईतिसा ईदृश । केतिसो कीदृश । एतातिसो एतादृश । इत्यादि ॥

## र्यस्नष्टा रिअसिनसिटाः क्वचित् ॥ ५० ॥

पैशाच्या र्य स्न ष्ट इत्येतेषा यथासख्य रिअ सिन सिट इत्यादेशा क्वचिद्भवन्ति । भार्या भारिआ । स्नान सिनान । कष्ट कसिट । क्वचिदिति किम् ? अय्यो । सुसा । भट्टो ॥

## टोस्तु तु ॥ ५१ ॥

पैशाच्या टु इत्यस्य तु इति भवति तु । कुटुम्बक कुतुंबक ॥

## यः पो हृदये ॥ ५२ ॥

पैशाच्या हृदयशब्दे यस्य पो भवति । हितपक । किं वि किं वि हितपके अत्थ चिंतयमानी ॥

## टा नेन तदिदमोः ॥ ५३ ॥

पैशाच्या तदिदमो स्थाने टावचनेन सह नेन इत्यादेशो भवति । नेन । तेन अनेन वा ॥

## नाये स्त्रियाम् ॥ ५४ ॥

पैशाच्या तदिदमो टावचनेन सह नाये इत्यादेश स्त्रिया भवति । नाये । तया अनया वा ॥

## ङसेस्तोतुशतः ॥ ५५ ॥

पैशाच्याम् अकारात्परस्य ङसे तो तु इत्येतौ भवत । शित्वात्पूर्वस्य दीर्घ । तुवातो तुवातु । ममातो ममातु ॥

## तडिजेच ॥ ५६ ॥

पैशाच्या लट प्रथमपुरुषैकवचनादेशयो इच् एच् इत्येतया तकारागम टिद्भवति । टकार आदिविध्यर्थ । रमति रमते । हसति हसते । गच्छति गच्छते । होति ॥

## एय्य एव भविष्यति ॥ ५७ ॥

पैशाच्यामिजेचो स्थान भविष्यति एय्य एत्ययमव भवति, नतु सि । त तथ्थून चिंतित रञ्ञा का एसा हुएय्य । ता दृष्ट्वा चिन्तित राज्ञा कैषा भविष्यति ॥

## इय्यो यक. ॥ ५८ ॥

पैशाच्या यक्प्रत्ययस्य इय्य इत्यादेशा भवति । नीइय्यते । गाइय्यत । रमिय्यत । पडिय्यते ॥

## कृञो डीर. ॥ ५९ ॥

पैशाच्या कृञ परस्य यक डित् ईर इत्यादेशो भवति । पढमदसनेन सव्वस्सेव समान कीरते । प्रथमदर्शनेन सर्वस्यैव सम्मान क्रियते ॥

## क्त्वा तून ॥ ६० ॥

पैशाच्यां क्त्वाप्रत्यय तून इत्यादेशमापद्यते । गंतून । रतून । मतून । हशितून । पठितून । कथितून ॥

## ष्ट्वः ट्टूनत्थूनौ ॥ ६१ ॥

पैशाच्यां षत्वे कृते ष्ट्वेतिसिद्धस्य क्त्वाप्रत्ययस्य स्थाने ट्टून त्थून इत्यादेशौ भवत । तट्टून तत्थून । नट्टून नत्थून ॥

## शेष शौरसेनीवत् ॥ ६२ ॥

पैशाच्यां यदुक्त ततोऽयत् शौरसेनीवद्भवति । अथ ससरीरो भगव मकरद्धजो एत्थ परिभमन्तो एव्व एवविधाए भगवतीए कथ ताए सातेसगहन क क एतातिस, अतित्थपुरव महाधन तट्टून ॥

## न प्रायो लुक्कादिच्छलूषट्छम्यन्तसूत्रोक्तम् ॥ ६३ ॥

पैशाच्यां 'प्रायो लुक्कगचजतदपयवाम्' इत्यारभ्य 'छलूषट्छमीसुधा शावसप्तपर्णे' इति यावत् यानि सूत्राणि तैर्यदुक्त कार्य तन्न भवति । मकर केतू । मगधपुत्तवचन । विजयसेनेन लपित । मत । पाप । आयुध । देवरो । एवमन्यसूत्राणामप्युदाहरणानि द्रष्टव्यानि ॥

## रो लस्तु चूलिकापैशाच्याम् ॥ ६४ ॥

चूलिकापैशाच्यां भाषायां रेफस्य लकारो भवति तु । पनमत पनयप्पकुपितकालीचलनग्गलग्गपतिबिंब तस्स तु न उतप्पनेसु एक्कातसतनु थल लुत्त । नलो नरो । सलो सरो ॥

## गजडदबघझढधभा कचटतपखछठथफाः ॥ ६५ ॥

चूलिकापैशाचिके गजडदबघझढधभ इत्येतेषां यथासंख्य कचटतप खछ ठथफ इत्येते लितो भवन्ति । नगर नकल । मार्गण मक्कनो । मेघ मेखो । घन खनो । व्याघ्र वक्खो । राजा राचा । जीमूत चीमूतो । जर्जर चच्चल । निर्झर निच्छलो । झर्झर छच्छलो । तडाग तटाकं । डमरुक टमरुको । मण्डल मटल । गाढ काठ । ढक्का ठक्का । षण्ड सटो । मदन मतनो । दामोदर

तामोतरो। मन्दर मतरो। मधुर मथुल। धारा थारा। बान्धव बथवो। बालक पालको। रभस रफसा। रम्भा रफा। भगवती फकवती। नियोजित नियोचित। क्वचिल्लाक्षणिकस्यापि-प्रतिमा पडिमा पटिमा। दंष्ट्रा दाढा ताठा॥

## अन्येषामादियुजि न ॥ ६६ ॥

अन्येषामाचार्याणा मते गजडदबघझढधभ इत्येषामादौ स्थिताना युजि धातौ च कचटतपखछठथफा न भवन्ति। गती। घम्मो। जनो। झल्लरी। डमरुक। ढक्का। दान। धूळी। बालो। पाल। युज्-नियोजितम्। अन्येषा मिति किम्? कती। नियोचित॥

## शेष प्राग्वत् ॥ ६७ ॥

चूलिकापैशाचिके 'रो लस्तु' इत्यादि यदुक्त, ततोऽयत् प्राग्वत् प्राक्तन पैशाचीवद्भवति। 'नो णनो'—नयन। फनी। एवमन्यदपि॥

इति श्रीत्रिविक्रमदेवकृतप्राकृतव्याकरणवृत्तौ तृतीयस्याध्यायस्य द्वितीय पाद ॥

---

## प्रायोऽपभ्रंशेऽचोऽच् ॥ १ ॥

अपभ्रंशेऽच स्थाने प्राय अच् अ·यो भवति। कच्च काच। वेणा वेणी। बाह् बाहा बाहु। पट्ठ पुट्ठ(१) पृष्ठम्। तणु तिणु तुण तृणम्। सुकिदु सुकुदु सिकिउ सुकृतम। लिह् लिहा लेह् लेखा। गउर गार। प्रायोग्रहणात् यश्चापभ्रंशे शेषा वक्ष्यते, तस्यापि क्वचित्प्राकृतवत् शौरसेनीवच्च कार्य भवति॥

## अचोऽस्तवोऽखौ कखतथपफा गघदधबभान् ॥ २ ॥

अपभ्रंश इत्यनुवर्तते। अपभ्रंशे अच परे अस्तव असयुक्ता अखौ अनादौ वर्तमाना कखतथपफ इत्येते वर्णा गघदधबभ इत्येतान् प्रायो यथा संख्यमापद्य ते। कस्य ग -

जं दिट्ठउ सोमग्गहणु-असइहिँ हसिउ निसकु।
पिअमाणुसविच्छोहगरु गिलि गिलि राहु मियकु॥

---

( १ ) पिट्ठी ख०।

यदू दृष्ट सोमग्रहणमसतीभिर्हसित निःशङ्कम् ।
प्रियमानसविक्षोभकर गिल गिल राहो मृगाङ्कम् ॥

खस्य घ –

अम्मीए सत्थावत्थेहिं सुधिं चिन्तिज्जइ माणु ।
पिए दिट्ठे हल्लोहलेण को चेअइ अप्पाणु ॥
अम्ब ! स्वस्थावस्थै सुखेन चिन्त्यते मान ।
प्रिये दृष्टे हल्लोहल्लेन कश्चेतयत्यात्मानम् ॥

तथफफाना दधबभा –

सबधु करेप्पिणु कधिदु मइ तसु पर सभलउ जम्मु ।
जासु न चाउ न चारहडि न य पम्हट्ठउ धम्मु ॥
शपथ कृत्वा कथित मया तस्य पर सफल जन्म ।
यस्य न त्यागो न चारभटी न यस्य प्रमुष्टो धर्म ॥

अच इति किम् ? गिलि गिलि राहु मयकु । अस्तव इति किम् ? एक्कु हिं अक्खिहिं सावणु । एकस्मिन्नक्षिणि श्रावण । अखाविति किम् ? सबधु प्पिणु करेप्पिणु । प्रायोधिकारात् क्वचिन्न भवति—

(१)जइ केवँइ पावीसु पिउ अकिआ कोड्डु करीसु ।
पाणीउ नवइ सरावि जिवँ सव्वगे पइसीसु ॥
यदि कथञ्चित् प्राप्स्ये प्रियमकृत कौतुक करिष्यामि ।
पानीय नवे शरावे यथा सर्वाङ्गेण प्रविशति ॥
उअ कणिआरु पफुल्लिअउ कचणकातिपयासु ।
गोरीवयणविणिज्जिअउ न सेवइ वणवासु ॥
पश्य कर्णिकार प्रफुल्लित काञ्चनकान्तिप्रकाश ।
गौरीवदनविनिर्जित इव सेवते वनवासम् ॥

## तु मो ड्वम् ॥ ३ ॥

अपभ्रंशेऽच परोऽसयुक्तोऽनादौ वर्तमानो मकारो वत्वमापद्यते तु । ङित्वात् सानुनासिक । कवँलु कमलु । भवँरु भमरु । लाक्षणिकस्यापि–जीवँ । आवँ ।

( १ ) इदमुदाहरणं ख० पुस्तके नास्ति ।

तिवँ। अच इत्येव-समारोइ लोउ। असयुक्त इत्येव-तसु परसुलभउ जम्मु। अखावित्येव मअणु॥

## ह्मो म्हम् ॥ ४ ॥

अपभ्रंशे ह्म इत्यय मकाराक्रान्तहकारमापद्यते तु। म्ह इति 'श्मष्मस्मह्मा मस्मरररश्मौ म्ह' इति प्राकृतलक्षणविहितोऽत्र गृह्यते, संस्कृते तस्यासभवात्। गिम्हा गिह्मो। बम्हणो ब्रह्मणो।

> बम्ह ते विरला केवि नर जे सव्वग छइल्ल।
> जे वका ते बचयर जे उज्जुअ ते वइल्ल॥
> ब्रह्मन्! ते विरला केपि नरा ये सर्वाङ्गदक्षा।
> ये वक्रास्ते वञ्चकतरा य ऋजवस्ते बलीवर्दा॥

## रो लुकमधः ॥ ५ ॥

अपभ्रंशे सयोगस्याधो वर्तमानो रेफो लुक लोपमाप्नोति तु। पिउ प्रिऊ प्रिय।

> जइ केवइ पावीसु पिउ अकिआ काड्ड करीसु।
> पाणीउ नवइ सरावि जिवँ सव्वगे पइसीसु॥
> यदि कथञ्चित् प्राप्स्ये प्रियमकृत कौतुकं करिष्यामि।
> पानीय नवे शरावे यथा सर्वाङ्गेण प्रविशति॥

पक्षे—

> जइ भग्गा पारक्कडा तो सहि मज्झु पिएण।
> अह भग्गा अम्हहतणा तो ते मारिअडेण॥
> यदि भग्ना परकीयास्तत सखि! मम प्रियेण।
> अथ भग्ना अस्मदीयास्ततस्तेन मारितेन॥

## क्वचिदभूतोऽपि ॥ ६ ॥

अपभ्रंशे क्वचिदविद्यमानोऽपि रेफो भवति। व्रासू व्यास।

> व्रासु महरिसि एउ भणइ जइ सुइ सत्थ पमाणु।
> मायह चलण णवताह दिवे दिवे गगण्हाणु॥

व्यासो महर्षिरेतद्भणति यदि श्रुति शास्त्र प्रमाणम् ।
मातृणा चरणौ नमता दिवा दिवा गङ्गास्नानम् ॥

कश्चिदिति किम् ? वासेण वि भारअखभि बद्ध । व्यासेनापि भारत स्तम्भे बद्धम् ॥

## विपदापत्सम्पदि द इ ॥ ७ ॥

अपभ्रंशे विपद् आपद् सपद् इत्येतेषा दकारस्य इकारो भवति । विवइ । आवइ । सपइ । प्रायोऽधिकारात्—गुणेहिं न संपइ कित्ति । गुणैर्न सम्पत्कीर्तिः ॥

## कथयथातथा डिहडिथडिमडेमास्थादे ॥ ८ ॥

अपभ्रंशे कथ यथा तथा इत्येतेषु थादेरवयवस्य इह इथ इम एम इत्येते चत्वार आदेशा डितो भवन्ति(१) । किह किथ किम केम कथम् । जिह जिथ जिम जेम यथा । तिह तिथ तिम तेम तथा ।

बिम्बाहरि तणुरअणवणु किह ठिउ सिरिआणदु ।
निरुवमरसु पिए पिअविजणु सेसहो दिगणी मुद्दु ॥
बिम्बाधरे तनुरदनव्रण कथ स्थित श्रीआनन्द ! ।
निरुपमरस प्रियेण पीत्वेव शेषस्य दत्ता मुद्रा ॥
केम समप्पउ दुट्ठु दिणु किध रअणी चुडु होइ ।
णववहुदसणलालसउ वहइ मणोरहसोइ ॥
कथ समाप्यता दुष्ट दिन कथ रजनी यदि भवतु ।
नववधूदर्शनलालसो वहति मनोरथान् सोऽपि ॥
ओ गोरीमुहणिज्जिअउ वद्दलि लुक्कु मिअङ्कु ।
अन्नु वि जो परिहविअतणु सो किम भमइ निसङ्कु ॥
ओ गौरीमुखनिर्जितो दुर्दिने लीनो मृगाङ्क ।
अन्योऽपि य परिभूततनु स कथ भ्रमति नि शङ्कम् ॥
भण सहि निहुअउ तेम मइ जइ पिउ दिट्ठु सदोसु ।
जेम न जाणइ मज्झु मणु पक्खावडिअ तासु ॥

---

(१) इत पर प्राय ख०पुस्तके केवलं शब्दरूपाण्येवोदाहरणेषु दत्तानि, क०पुस्तके तु पद्यगतान्येव । द्विविधान्यपि सद्गृहीतान्यत्र पुस्तके ।

भण सखि ! निभृत तथा मा यदि प्रियो दृष्ट सदोष ।
यथा न जानाति मम मन पक्षायित तस्य ॥
जिम जिम वंकिम लोअणहं णिरि सावलि सिक्खेइ ।
तिम तिम वम्महु अप्पिअ सरा खरपत्थरी तिक्खेइ ॥
यथा यथा वक्रिमाण लोचनयोर्नितरा श्यामला शिक्षयति ।
तथा तथा मन्मथो निजान् शरान् खरप्रस्तरे तीक्ष्णयति ॥
णवर मिअङ्कु वि तिह तवइ जिह दिणअरु खअगालि ।
मइ जाणिउ पिअविरहिअह कवि धर होइ विआलि ॥
केवल मृगाङ्कोऽपि तथा तपति यथा दिनकर क्षयकाले ।
मया ज्ञात प्रियविरहिताना कापि धरा भवत्यपराह्णे ॥

एवं जिथतिथौ उदाहार्यौ ॥

## दादेर्डेहो यादृक्तादृक्कीदृगीदृशाम् ॥ ९ ॥

अपभ्रंशे यादृगादीना दादेरवयवस्य डित् एह इत्यादेशो भवति । सर्वत्र डित्वाट्टिलोप ।

मइ भणिअउ बलिराउ तुहु केहउ मग्गणु एहु ।
जेहु तेहु नवि होइ वढ सइ नाराअणु एहु ॥
मया भणितो बलिराज ! त्व कीदृङ्, मार्गण ईदृक् ।
यादृक्तादृङ् न भवति मूढ ! स्वय नारायण एष ॥

## डइसोऽताम् ॥ १० ॥

अपभ्रंशे यादृशादीनामकारान्ताना यादृश–तादृश–कीदृश–ईदृश–इति रूपाणां दादेरवयवस्य डित् अइस इत्यादेशो भवति । जइसु । तइसु । कइसु । अइसु ॥

## यावत्तावत्युमहिंमा वादेः ॥ ११ ॥

अपभ्रंशे यावत्तावदित्यव्यययोर्वकारादेरवयवस्य उं महिं म इति त्रय आदेशा भवन्ति ।

तिलह तिलत्तणु ताउ पर जाउ न नेह गलन्ति ।
नेहि पणट्ठहि तेज्जि तिल तिल फिट्टवि खल होन्ति ॥

तिलाना तिलत्व तावत्पर यावन्न स्नेहा गलन्ति ।
स्नेहे प्रनष्टे त एव तिलास्तिला भ्रष्ट्वा खला भवन्ति ॥
जामहिं विसमी कज्जगइ जीवहं मज्झे एइ ।
तामहिं अच्छउ इअरु जणु सुअणुवि अंतरु देइ ॥
यावद्विषमा कार्यगतिर्जीवाना मध्य एति ।
तावदास्तामितरो जन सुजन एवान्तर ददाति ॥
जाम न निवडइ कुम्भअडि सीहचवेडचडक्क ।
ताम समत्तहं मयगलहं पइ पइ वज्जइ ढक्क ॥
यावन्न निपतति कुम्भतटे सिंहचपेटादढाघात ।
तावत् समस्ताना मदकलाना पदे पदे वाद्यते ढक्का ॥

## डेत्तुलडेवडावियत्कियति च व्यादेर्वतुप ॥ १२ ॥

इयत्कियदित्येतयोश्चकाराद्यावत्तावतोश्च परिमाणार्थे विहितो यो वतुप्प्रत्यय तस्य व्यादेर्वकारादेर्यकारादेश्चावयवस्य एत्तुल एवड इत्यादेशौ डितौ भवत । एत्तुला । केत्तुलो । एवडो । केवडो ।

जेवडु अंतरु रावणरामहं तेवडु अंतरु पट्टणगामहं ।
यावदन्तर रावणरामयो , तावदन्तर पत्तनग्रामयो ।

## डेत्तहे त्रलः ॥ १३ ॥

अपभ्रंशे सर्वादे सप्तम्यर्थे त्रल्प्रत्ययस्य डित् एत्तहे इत्यादेशो भवति । जेत्तहे । तेत्तहे ।

जेत्तहे तेत्तहे वारि घरि लच्छि विसंठुल धाइ ।
पिअपब्भट्टव गोरडि निच्चल कहिं वि न ठाइ ॥
यत्र तत्र द्वारे गृहे लक्ष्मीर्विसंस्थुला भवति ।
प्रियभ्रष्टेव गौरी निश्चला कुत्रापि न तिष्ठति ॥

## यत्तदोर्डेत्तु ॥ १४ ॥

त्रल इत्यनुवर्तते । यत् तत्-आभ्या परस्य त्रल्प्रत्ययस्य डित् एत्तु इत्ययमादेशो भवति । जेत्तु ठिदो । यत्र स्थित । तेत्तु ठिदो । तत्र स्थित ॥

## कुत्रात्रे च डेत्थु ॥ १५ ॥

अपभ्रंशे कुत्र अत्र इत्येतयो स्थितस्य चकारात् यत्तदो परस्य त्रल् प्रत्ययस्य डित् एत्थु इत्यादेशो भवति। केत्थु। एत्थु। जेत्थु। तेत्थु।

जइ सो घडिदि प्रयावदी केत्थुवि लेप्पिणु सिक्खु।
जेत्थुवि तेत्थुवि एत्थु जगि भण तो तहि सारिक्खु ॥
यदि स घटयति प्रजापति कुत्रापि लात्वा शिक्षाम्।
यत्रापि तत्राप्यत्र जगति भण तर्हि तस्या सदृक्ष ॥

## त्वतलौ प्पणम् ॥ १६ ॥

अपभ्रंशे भावेऽर्थे विहितौ त्वतल्प्रत्ययौ प्पण इत्यादेशमापद्येते। पड्डुप्पण पटुत्व पटुता वा। सुक्कप्पण शुक्लत्व शुक्लता वा।

साहुवि लोउ तडप्फडइ वड्डत्तणहो तणेण।
वड्डुप्पणु परिपाविअइ हत्थि मोक्कलडेण ॥
सर्वोऽपि लोक उत्ताम्यति बृहत्त्वस्यार्थे।
महत्त्व पर प्राप्यते हस्तेन मुक्तेन ॥

तडप्फडइ इति तु औत्सुक्ये शब्दानुशासने देशीयात् ॥

## तव्यस्य एव्वइएव्वउएव्वा. ॥ १७ ॥

अपभ्रंशे तव्यप्रत्ययस्य एव्वइ एव्वउ एव्व इति त्रय आदेशा भवन्ति। जेव्वइ, जेव्वउ, जेव्व जेतव्य।

एउ गृण्हेप्पिणु ध्रु मइ जइ प्रिउ उव्वारिज्जइ।
महु करिएव्वउ किंपि नवि मरिएव्वउ पर देज्जइ ॥
एतद् गृहीत्वा यन्मया यदि प्रिय उद्धार्यते।
मम कर्तव्य किमपि नापि मर्तव्य पर दीयते ॥
देसुच्चाडणु सिहिकढणु घणकुट्टणु जं लोइ।
मंजिट्ठए अइरत्तिए सव्वु सहेव्वउ होइ ॥
देशोच्चाटन शिखिक्वथनं घनकुट्टन यल्लोके।
मञ्जिष्ठयाऽतिरक्तया सर्वं सोढव्यं भवति ॥
सोएव्वा पर वारिआ पुप्फवईहिं समाणु।

जग्गेव्व पुणु को धरइ जइ सो वेउ पमाणु ॥
स्वपितव्य पर वारित पुष्पवतीभि समम् ।
जागर्तव्य पुन को बिभर्ति यदि स वेद प्रमाणम् ॥

## क्त्व इइउइविअवि ॥ १८ ॥

अपभ्रंशे क्त्वाप्रत्ययस्य इ इउ इवि अवि इति चत्वार आदेशा भवन्ति। करइ, करइउ, करइवि, करअवि कृत्वा । इ–

हिअडा जइ वेरिअ घणा तो किं अब्भि चडाहु ।
अम्हहं बे हत्थडा जइ पुणु मारि मराहु ॥
हृदय ! यदि वैरिणो घनास्तत किमाकाश आरोहाम ।
अस्माक द्वौ हस्तौ यदि पुनर्मारयित्वा म्रियामहे ॥

इउ—

पओहर वज्जडा निच्चु जे समुह चिटठन्ति।
महु थक्कहा समरगणि गयघड भज्जिउ जति ॥
पयोधरौ वज्रमयौ नित्य यौ समुख तिष्ठत ।
मम ता तस्य समराङ्गणे गजघटा भङ्क्त्वा यान्ति ॥

इवि—

रक्खइ सा विसहारिणी बे कर चुम्बिवि जीउ ।
पडिबिम्बिअमुजालु जलु जेहिं अडोहिउ पीउ ॥
रक्षति सा विषहारिणी द्वौ करौ चुम्बित्वा जीवम् ।
प्रतिबिम्बितमुञ्जाल जल याभ्यामनवगाह्य पीतम् ॥

अवि—

बाह विछोडवि जाहि तुहु हउ तेवँइ को दोसु।
हिअअट्ठिउ जइ नीसरहि जाणउ मुज स रोसु ॥
बाहू विच्छोड्य यासि त्व भवतु तथा को दोष ।
हृदयस्थितो यदि निस्सरसि जानामि मुञ्ज ! स रोष ॥

## एप्प्येप्पिण्वेव्येविणु ॥ १९ ॥

अपभ्रंशे क्त्वाप्रत्ययस्य एप्पि एप्पिण एवि एविण इति चत्वार

आदेशा भवन्ति। करएप्पि, करएप्पिणु, करएपि, करएपिणु कृत्वा।

जेप्पि असेसु कसाअबलु देप्पिणु अभउ जअस्सु।
लेवि महव्वअ सिवु लहहि झाएपिणु तत्तस्सु॥
जित्वाऽशेष कषायबल दत्त्वाऽभय जगत।
लात्वा महाव्रतानि शिव लभन्ते ध्यात्वा तत्त्वम्॥

पृथग्योग उत्तरार्थ॥

## तुम एवमणाणहमणहिं च॥ २०॥

अपभ्रंशे तुमुन्प्रत्ययस्य एव अण अणह अणहिं इत्येते चत्वार, चकारात् एप्पि एप्पिणु एपि एपिणु इत्येते च चत्वार एवमष्टादेशा भवन्ति। करएव, करअण, करअणह, करअणहिं, करएप्पि, करएप्पिणु, करएपि करएपिणु कर्तुम्।

देव दुक्करु निअयधणु करअण न तउ पडिहाइ।
एमइ सुहु भुञ्जणह मणु पर भुजणहिं न जाइ॥
दातु दुष्कर निजधन कर्तुं न तप प्रतिभाति।
एवमेव सुख भाक्तु मन पर भोक्तु न याति॥
जेप्पि चएप्पिणु सअल धर लेपिणु तवु पालेवि।
विणु सते तित्थेसरेण को सक्कइ भुवणेवि॥
जेतु त्यक्तु सकल, धरा लातु तप पालयितुम्।
विना शान्त्या तीर्थेश्वरेण क शक्नोति भुवनेऽपि॥

## गमेस्त्वेप्येपिण्वोरेलुक्॥ २१॥

अपभ्रंशे गमेर्धातो परयो एपि एपिणु इत्यादेशयोरेकारस्य लुग्भवति तु। गंपि, गंपिणु, गमेप्पि, गमेप्पिणु गत्वा।

गपिणु वाराणसिहि नर अह उज्जइणिहि गपि।
मुआ पप्पुवन्ति परम पउ दिव्वन्तरइ न जपि॥
गत्वा वाराणस्या नरा अथ उज्जयिन्या गत्वा।
मृता प्राप्नुवन्ति परम पदं दिव्यन्तरे न यदपि॥

पक्षे–

गग गमेप्पिणु जो क्खु अभु जो सिवतित्थु गमेप्पि।

कीडदि तिदसावास गइ सोज्ज लोउ जएप्पि ।
गङ्गा गत्वा य खलु अन्यत् य शिवतीर्थं गत्वा ॥
क्रीडति त्रिदशावास गत सोऽद्य लोक जित्वा ॥

## तृनो णअल् ॥ २२ ॥

अपभ्रशे तृन प्रत्ययस्य लित् णअ इत्यादेशो भवति । होणउ भविता । सुणउ श्रोता ।

हत्थि मारणउ लोउ बोल्लणउ ।
पडहु वज्जणउ सुनउ भसणउ ॥
हस्ती मारयिता, लोक कथयिता ।
पटहो वदिता, शुनको भषिता ॥

## छस्य युष्मदादेर्डारः ॥ २३ ॥

अपभ्रशे युष्मदादिभ्य परस्य छस्य डित् आर इत्यादेशो भवति । तुम्हारु युष्मदीय । अम्हारु अस्मदीय ।

सदेसें काइ तुम्हारेण ज सगहो न मिलिज्जइ ।
सुविणतरि न पाणिएण पिअ पिआस किं छिज्जइ ॥
संदेशेन किं त्वदीयेन यत् सङ्गस्य ( सङ्गो ) न मिलयते ।
स्वप्नान्तरेऽपि तेन पानीयेन प्रिय ! पिपासा किं छिद्यते ॥

दिक्खि अम्हार क तु । पश्य मदीय का तम् । बहिणि अम्हार कन्तु । भगिनि ! मदीय कान्त ॥

## जणिजणुननइनावइनाइ इवार्थे ॥ २४ ॥

अपभ्रशे इवार्थे जणि जणु न नइ नावइ नाइ इति षडादेशा भवन्ति । चदु जणि, चदु जणु, चदु न, चदु नइ, चदु नावइ, चदु नाइ चन्द्र इव । जणि—

चम्पअकुम्भमज्झि सहि सहलु पइट्ठउ ।
सोहइ इन्दणील जणि कणइ उविट्ठउ ॥
चम्पककुम्भमध्ये सखि ! भ्रमर प्रविष्ट ।
शोभते इन्द्रनील इव कनक उपविष्ट ॥

जणु—

निरुवमरसु पिए पिअविजणु । प्रागेव व्याख्यातम् ।

न—

मुहकबरिबन्ध तहे सोह धरहि न मल्लजुज्भु ससिराहु करहिं ।
तहे सोहहिं कुरल भमरउलतुलिअ न तिमिरडिंभ खेल्लन्ति मिलिअ ॥
मुखकबरीबन्धौ तस्याः शोभा धरत इव मल्लयुद्ध शशिराहू कुरुत ।
तस्याः शोभन्ते कुरला भ्रमरकुलतुलिता इव तिमिरडिम्भा क्रीडन्ति मिलित्वा ॥

नइ—

रविअत्थमणसमाउलें कंठट्ठिअ न छिन्नु ।
चक्कें खण्डु मुणालिअहे नइ जीवग्गलु दिन्नु ॥
रव्यस्तमनसमाकुलेन कण्ठस्थितो न च्छिन्नः ।
चक्रेण खण्डो मृणालिकाया इव जम्बार्गलो दत्तः ॥

नावइ—

पेक्खीविणु जिणवरह अदीरहघणसलोणु ।
नावइ गरुमच्छहरिउ जलणि पवीसइ लोणु ॥
दृष्ट्वा जिनवराणामदीर्घधनसलावण्यम् ।
इव गुरुमत्स्यहरित ज्वलने प्रविशति लवणम् ॥

नाइ—

वलआवलिनिवडणवलआ धण्णी उद्धभुअ जाइ ।
वल्लहविरहधूमह अस्स गाहप्पण गवेसइ नाइ ॥
वलयावलिनिपतनवलया धन्या उर्ध्वभुजा याति ।
वल्लभविरहधूमादस्य गाधत्व गवेषयत इव ॥

## तणेणतेसितेसितेहिंकेहिं तादर्थ्ये ॥ २५ ॥

अपभ्रंशे तादर्थ्ये द्योत्ये तणेण तेसिं तेसि तेहि केहिं इति पञ्च निपाता प्रयोक्तव्याः । रामतणेण, रामतेसिं, रामतेसि, रामतेहिं, रामकेहिं णमोक्कारो रामार्थं नमस्कारः ।

ढोल्ला एह परिहासडी अइ भन कवणहिं देसि ।

इउ झिज्जउ तउकेहि पिअ तुहु पुणु अन्नहितेसि ॥
विट ! एता परिहासिकामयि भण कस्मै न ददासि ।
अहं क्षीये तवार्थे प्रिय ! त्वं पुनरन्यस्यार्थे ॥
वड्डत्तणहोतणेण महत्त्वस्यार्थे । एव तेहिंतेसिमावुदाहार्यौ ॥

## स्वार्थे डुः पुनर्विनाध्रुवम ॥ २६ ॥

अपभ्रंशे पुन विना ध्रुवम् इत्येतेभ्य पर स्वार्थे डित् उप्रत्ययो भवति । पुणु होइ पुनर्भव । पावु विनु पाप विना । ध्रुवु जम्मु ध्रुवं जन्म।

सुमरिज्जइ त वल्लहउ ज वीसरइ मणाउ ।
जहिं पुणु सुमरणु जाउ गउ तहो नेहहो काइ नाउ ॥
स्मर्यते तद्वल्लभ यद्विस्मरति मनाक् ।
यस्मिन् पुन स्मरण यावद्गत तस्य स्नेहस्य किं नाम ॥
चचलु जीविउ ध्रुवु मरणु पिअ रूसिज्जइ काइं ।
होसइ दिअहा रूसणा दिव्वइ वरिससआइ ॥
चञ्चल जीवित ध्रुव मरण प्रिय ! रुष्यते कथम् ।
भविष्यन्ति दिवसा रोषणस्य दिव्यानि वर्षशतानि ॥

## डेंडाववश्यमः ॥ २७ ॥

स्वार्थ इत्यनुवर्तते । अपभ्रंशे अवश्यम परौ ए अ इत्येतौ डितौ प्रत्ययौ भवत । अवसें, अवस अवश्यम् ।

जिब्भिन्दिउ नायउ वसि करहु जसु अधिन्नइ अन्नइ ।
मूलि विणट्ठइ तुंबिणिहे अवसें सुक्कइ पण्णइ ॥
जिह्वेन्द्रिय नायक वशे कुरुत यस्याधीनान्यन्यानि ।
मूले विनष्टे तुम्बिन्या अवश्य शुष्यन्ति पर्णानि ॥
अवस न सुअहि सुहच्छिअहिं । अवश्यं न स्वपन्ति सुखासिकायाम् ॥

## परमेकशसोर्डडि ॥ २८ ॥

अपभ्रंश परम् एकशस् इत्याभ्या परौ स्वार्थे डितौ अ इ इत्येतौ यथा सख्य भवत । पर परम् । एक्कसि एकश ।

उणहि न सपइ कित्ति पर फल लिहिआ भुञ्जन्ति ।
केसरि न लहइ बोड्डिअवि गय लक्खेहि घेप्पन्ति ॥

गुणैर्न सम्पत् कीर्ति पर फलानि लिखितानि भुञ्जते ।
केसरी न लभते कपर्दिकामपि गजा लक्षैर्गृह्यन्ते ॥
एक्कसि सीलकलंकिअह् देज्जहिं पच्छित्ताइं ।
जो पुणु खण्डइ अणुदिअहु तसु पच्छित्तें काइं ॥
एकश शीलकलङ्किताना दीयन्ते प्रायश्चित्तानि(१) ।
य पुन खण्डयत्यनुदिवस तस्य पश्चात्तापेन(२) किम् ॥

## अडडडुल्लाः स्वार्थिककलुक् च ॥ २९ ॥

अपभ्रंशे नामत परत अ इति अड उल्ल इत्येतौ च डितौ प्रत्ययौ भवत, तत्संनियोगेन स्वार्थिकस्य कप्रत्ययस्य लोपश्च । बलउ, बलडु, बलुल्लु बलम् ।

विरहानलजालकरालिअउ पहिउ पन्थि ज दिट्ठउ ।
त मेलवि सव्वहिं पन्थिअहिं सोजि किअउ अग्गिट्ठउ ॥
विरहानलज्वालाकरालित पथिक पथि यद् दृष्ट ।
तन्मिलित्वा सर्वै पान्थै स एव कृतोऽग्निष्ठ ॥
महु कन्तहो बे दोसडा हेल्लि म झङ्खहि आलु ।
देन्तहो हउ पर उव्वरिअ जुज्झन्तहो करवालु ॥
मम कान्तस्य द्वौ दोषौ हे सखि ! मा जल्पाऽनर्थकम् ।
ददतोऽहं परमुद्धरिता युध्यमानस्य करवालम् ॥

एक्क कुडुल्ली पञ्चहिं रुद्धी । एका कुटी पञ्चभी रुद्धा ॥

## तद्योगजाश्च ॥ ३० ॥

अपभ्रंशे अडडडुल्लाना योगभेदेभ्यो ये जायन्ते अडडुल्लअडुल्लड इत्यादय प्रत्यया तेऽपि स्वार्थे प्रायो भवन्ति । अड-

फोडेन्ति जे हिअडउ अप्पणउ ताहं पराई कवण घिणु ।
रक्खेज्जउ तरुणहो अप्पणा बालहे जाया विसम थणु ॥
स्फोटयन्ति ये हृदयमात्मीय तेषां परकीया का घृणा ।
रक्षतं तरुणा ! आत्मानं बालाया जातौ विषमौ स्तनौ ॥

डुल्लअ—चूडुल्लअउ चुण्णीहोसइ । चूडा चूर्णीभविष्यति ।

---

( १ ) पश्चात्तापा —क० । ( २ ) प्रायश्चित्तेन—ख० ।

डुल्लइ-देक्खिअ बाहुबलुल्लडुडउ मुबइ नीसास । दृष्ट्वा बाहुबल मुञ्चति नि श्वासम् । एव बाहुबलुल्ल इत्यादि ॥

## डीत स्त्रियाम् ॥ ३१ ॥

अपभ्रंशे स्त्रिया वर्तमानान्नाम्न इत प्राक्तनसूत्रद्वयविहितप्रत्ययान्तात् परा डीप्रत्ययो भवति ।

वहिआ दिट्ठा गोरडी तुट्ठा मग्गु निअत ।
असुसाए क चूआ ? तोतुवाण कर त ॥
दृष्टा दृष्टा गौरी तुष्टा मार्गं पश्यन्ती ।
अश्रूच्छ्वासै क चकन्ति ? मितशुष्क कुर्वती ॥

## अदन्तात डा ॥ ३२ ॥

अपभ्रंशे अडडडुल्लाना मध्ये य अकारान्त प्रत्यय तदन्तान्नाम्न स्त्रिया वर्तमानात् डाप्रत्ययो भवति । ङ्यपवाद, ।

पिउ आअगउ पत्तडिम्झुणि कण्णइ पइट्ठु ।
तहो विरहहो नासन्तहो धूलडिआवि न दिट्ठ ॥
प्रिय आगत पत्रध्वनि कर्णे प्रविष्ट ।
तस्य विरहस्य नश्यतो धूलिरपि न दृष्टा ॥

## इदतोऽति ॥ ३३ ॥

अपभ्रंशे स्त्रिया वर्तमानस्य नाम्नो योऽकारस्तस्य अति अकारे प्रत्यये परे इकारो भवति । धूलडिआवि न दिट्ठ । स्त्रियामित्येव-झुणि कण्णइ पइट्ठ ॥

## इदानीमेव्वहि ॥ ३४ ॥

अपभ्रंशे इदानीम स्थाने एव्वहि इति भवति । एव्वहि होइ । इदानीं भवतु

हरि नच्चावउ पगणइ विम्हइ पाडिउ लोउ ।
एव्वहि राहपओहरह ज भावइ त होउ ॥
हरिर्नर्तित प्राङ्गणे विस्मये पातितो लोक ।
इदानीं राधापयोधरयोर्यद्भविता तद्भवतु ॥

## एव जि ॥ ३५ ॥

अपभ्रंशे एवशब्दस्थाने जि इति भवति । रामु जि राम एव ।

जाउ म जतउ पल्लवह देक्खउ कइ पय देइ ।

हिअइ तिरिच्छी हउ जि पर पिउ डम्बरइ करेइ ॥

यातु मा यात पल्लवत पश्यामि कति पदानि ददाति ।

हृदये तिर्यग्भूताऽहमेव पर प्रियो डम्बराणि करोति ॥

## एवमेम ॥ ३६ ॥

एवम्—इत्यव्यये एम इति भवति । एम राम कुणइ । एव राम करोति ।

पियसगमि कउ निद्दडी पिअहो परोक्खहो केम ।

मइ वेन्निवि विन्नासिअ निद्द न एम न तेम ॥

प्रियसङ्गमे कुतो निद्रा प्रियस्य परोक्षस्य कथम् ।

मया द्वे अपि नाशिते निद्रा नैव न तथा ॥

## नहि नाहि ॥ ३७ ॥

नहि इत्यव्यय नाहि इति भवति । नाहि धम्मु नहि धर्म ।

एत्तहे मेह पिअन्ति जलु एत्तहे वडवाणलु आवट्टइ ।

पेक्खु गहीरिम साअरहो एक्कवि कणिअ नाहि ओहट्टइ ॥

इतो मेघा पिबन्ति जलमितो वडवानल आवर्तयति ।

पश्य गभीरत्वं सागरस्य एकापि कणिका नहि हीयते ॥

## प्रत्युत पच्छलिउ ॥ ३८ ॥

प्रत्युत इत्यव्यय पच्छलिउ इति भवति । पच्छलिउ सुघु । प्रत्युत सुखम् ।

सावसलोणी गोरडी नवखी कवि विसगठि ।

भड्डु पच्छलिउ सो मरइ जासु न लग्गइ कठि ॥

सर्वस्वलावण्या गौरी नवीना कापि विषग्रन्थि ।

भट प्रत्युत स म्रियते यस्य न लगति कण्ठे ॥

ग्रन्थिरित्यत्र 'लिङ्गमतन्त्र'मिति सूत्रात् स्त्रीलिङ्गता ॥

## एवमेव एमइ ॥ ३९ ॥

एवमेव इत्यव्ययम् एमइ इति भवति । एमइ लोगु एवमेव लोक ।

अगहिं अग न मिलिउ अहरे अहरु न पत्तु ।
पिअ जोअन्तिहे मुहकवँलु एमइ सुरउ समत्तु ॥
अङ्गैरङ्ग न मिलित सखि ! अधरेणाऽधरो न प्राप्त ।
प्रियस्य पश्यन्त्या मुखकमलमेवमेव सुरत समाप्तम् ॥

## सम समाणु ॥ ४० ॥

समम्-इत्यव्यय समाणु इति भवति । रामाण समाणु । रामेण समम् ।

कतु ज सीहहो उवमिअइ त महु खण्डिउ माणु ।
सीहु अरक्खअ गअ हणइ पिउ पयरक्ख समाणु ॥
कान्तो यत् सिंहस्योपमीयते तन्मम खण्डितो मान ।
सिंहोऽरक्षकान् गजान् हन्ति प्रिय पदरक्षै समम् ॥

## किल किर ॥ ४१ ॥

अपभ्रंशे किल इत्यव्यय किर भवति । न किर खाइ । न किल खादति ।

न किर खाइ न पिअइ न विद्दवइ धम्मि न वेच्चइ रूअडउ ।
इह किवणु न जाणइ जह जमहो खणेण पहुच्चइ दूअडउ ॥
न किल खादति न पिबति न विद्रवति धर्मे न व्ययति रूपकम् ।
इह कृपणो न जानाति यथा यमस्य क्षणेन पर्याप्नोति दूत ॥

## पग्गिमप्राइमप्राउप्राइव प्रायसः ॥ ४२ ॥

प्रायस्—इत्यव्ययम् अपभ्रंशे पग्गिम प्राइम प्राउ प्राइव इति चतुर्धा प्रयोज्यम् । पग्गिम चवलु । प्रायश्चपल इत्यादि ।

एसी पिउ रूसेसु हउ रुट्ठी मइ अणुणेइ ।
पग्गिम एइ मणोरहइ दुक्करु दइउ करेइ ॥
एष्यति प्रियो रुष्याम्यह रुष्टा मामनुनयति ।
प्राय एतान्मनोरथान् दुष्करान् दैव करोति ॥
प्राइव मुणिहवि भतडी ते मणिअडा गणन्ति ।
अक्खइ निरामइ परमपइ अज्जवि पउ न लहन्ति ॥
प्रायो मुनीनामपि भ्रान्ति ते मणीन् गणयन्ति ।
अक्षये निरामये परमपदेऽद्यापि पद न लभन्ते ॥

अन्ने ते दीहर लोअण अन्नु त भुअजुअलु ।
अन्नु सु घण थणहारु त अ नु जि मुहकमलु ॥
अन्ये ते दीर्घे लोचने अन्यत्तद्भुजयुगलम् ।
अन्य स घन स्तनभार तदन्यदेव मुखकमलम् ॥
अन्न सु केसकलापु सु अन्नजि प्राउ विहि ।
जेण णिअबिणि घडिअ सुगुणलाअण्णणिहि ॥
अन्य स केशकलाप सोऽन्य एव प्रायो विधि ।
येन नितम्बिनी घटिता स गुणलावण्यनिधि ॥
अंसुजलें प्राइव गोरिअहे सहि उव्वत्ता नअणसर ।
तें समुह सपेसिआ देंति तिरिच्छी घत्त पर ॥
अश्रुजलेन प्रायो गौर्या सखि! उद्वान्ते नयनसरसी ।
ते सम्मुखे सप्रेषिते ददतस्तिर्यग्घात परम् ॥

## दिवा दिवे ॥ ४३ ॥

दिवा इत्यव्यय दिवे इति भवति । दिव दिवे गगण्हाणु । दिवा दिवा गङ्गा स्नानम् ॥

## सह सहु ॥ ४४ ॥

सह इत्यव्यय सहु इति भवति ।

जइ पवसन्ते सहु न गयअ न मुअ विओएँ तस्सु ।
लज्जिज्जइ सदेहसडा दिन्तेहिं सुहअजणस्सु ॥
यदि प्रसवता सह न गता न मृता वियोगेन तस्य ।
लज्जते सन्देशान् ददतीभिस्सुभगजनस्य ॥

## मा मं ॥ ४५ ॥

मा इत्यव्य मं इति भवति । म धणि करहिं विसाउ । मा धन्ये! कुरु विषादम् । प्रायोग्रहणात्—

माणि पणट्ठइ जइ न तणु तो देसडा चइज्ज ।
मा दुज्जणकरपल्लवेहिं दीसिज्जन्तु भमेज्ज ॥
माने प्रणष्टे यदि न तनु, ततो देशान् त्यजेत् ।

मा दुर्जनकरपल्लवैर्दृश्यमानो भ्रमेत् ॥

## कुतः कउकहुतिहु ॥ ४६ ॥

अपभ्रंशे कुत इत्यव्यय कउ कहु तिहु इति च भवति । कउ गदु, कहु गदु, तिहु गदु । कुतो गत ।

महु कतहो गुट्ठट्ठिअहो कउ झुम्पडा वलन्ति ।
अह रिउरुहिरे उल्लवइ अह अप्पणेन भन्ति ॥
मम कान्तस्य गोष्ठस्थितस्य कुत कुटीरकानि ज्वलन्ति ।
अथ रिपुरुधिरेण विध्मापयत्यथात्मीयेन न भ्रान्ति ॥

धुमु कहु तिहु उट्ठिअओ । धूम कुत कुत उत्थित ॥

## अथवामनागहवइमणाउं ॥ ४७ ॥

अथवा मनाक् इत्येतौ अहवइ मणाउ इति भवत । अहवइ ण सुहं ताहु । अथवा न सुख तासाम् । किंपि मणाउ मह पिअस्स । किमपि मनाक् मम प्रियस्य ।

जाइज्जइ तहिं देसडइ लब्भइ पिअहो पमाणु ।
जइ आवइ तो आणिअइ अहवइ त जि निवाणु ॥
गम्यते तत्र देशे लभ्यते प्रियस्य प्रमाणम् ।
यद्यागच्छति तत आनीयतेऽथवा तदेव निर्वाणम् ॥
विहवि पणट्ठइ वकडउ रिद्धी जणसामन्नु ।
किंपि मणाउ महु पिअहो ससि अणुहरइ न अन्नु ॥
विभवे प्रनष्टे वक्र ऋद्धौ जनसामान्य ।
किमपि मनाक् मम प्रियस्य शशी अनुहरति नान्य ॥

## इतसेत्तहे ॥ ४८ ॥

इतस् इत्यव्ययम् एत्तहे इति भवति । एत्तहे मेह पिअन्ति जलु । इतो मेघा पिबन्ति जलम् ॥

## पश्चात्पच्छइ ॥ ४९ ॥

अपभ्रंशे पश्चादित्यव्यय पच्छइ इति भवति । पच्छइ होइ विहाणु । पश्चा द्भवति विभातम् ॥

## ततस्तदा तो ॥ ५० ॥

ततस् तदा इत्येतौ तो इति भवत । तो गदु । ततो गतस्तदा गतो वा ।

जइ भग्गा पारक्कडा ता सहि मज्झु पिएण ।
अह भग्गा अम्हहतणा तो तें मारिअडेण ॥
यदि भग्ना परकीयास्तत सखि ! मम प्रियेण ।
अथ भग्ना अस्मदीयास्तदा तेन मारितेन ॥

## त्वनुसाहावन्यथासर्वौ ॥ ५१ ॥

अन्यथा सर्व इत्येतौ अनु साह इति यथासख्य तु भवत । अनु कदु । अन्यथा कृतम् ।

विरहानलजालकरालिअउ पहिउ कोवि बुड्डिवि ठिअओ ।
अनु सिसिरकालि सीअलजलु धुमु कहँ तिहु उट्ठिअओ ॥
विरहानलज्वालाकरालित पथिक कोऽपि निमज्य स्थित ।
अन्यथा शिशिरकाले शीतलजलाद्धूम कथ कुत उत्थित ॥

पक्षे—अन्नहा साहुवि लोउ तडप्फडइ । अन्यथा साधुरपि तडफडा यते (ताम्यति) ॥

## किं काइकवणौ ॥ ५२ ॥

अपभ्रंशे किंशब्द काइ कवण इत्यादशौ आपद्यते ।

जइ सु न आवइ दूइ घरु काइ अहामुहु तुज्झु ।
वअणु जु खण्डइ तउ सहि एसो पिउ होइ न मज्झु ॥
यदि स नायाति दूति ! गृह किमधोमुख तव ।
वचन य खण्डयति तव सखि ! एष प्रियो भवति न मम ॥

काइ न दूरे पेक्खइ । किं न दूरे पश्यसि ? ताहं पराइ कवण घिणु । तेषां परकीया का घृणा ।

## उन्नविच्छवुत्ता विषण्णवर्त्मोक्ताः ॥ ५३ ॥

विषण्ण वर्त्म उक्त इत्येते वन्न विच्छ वुत्त इति यथासख्यं भवन्ति ।

मइ वुत्तउ तुहुं धुरु धरहि कसरेहिं विगुत्ताइ ।

पइ विणु धवल न चडइ भरु एमइ उन्नउ काइं ॥
मयोक्त त्व धुर विभूहि कसरैर्विगोपित ।
त्वया विना धवल ! न चटति भर एवमेव विषण्ण किम् ॥
ज मणुविच्छि न माइ । य मनोवर्त्मनि न माति ॥

## अत् खुः परस्परस्य ॥ ५४ ॥

अपभ्रंशे परस्परशब्दस्य खु आदि अद्भवति ।

ते मुग्गडा हराविआ जे परिविट्ठा ताहं ।
अवरोप्परु जोअताह सामिउ गंजिउ जाह ॥
ते मुद्गा हारिता ये परिवेष्टितास्तेषाम् ।
परस्पर पश्यता(१) स्वामी परिभूतो(२) येषाम् ॥

## अन्यादृशस्याण्णाइसावराइसौ ॥ ५५ ॥

अपभ्रंशे अन्यादृशस्य अन्नाइस अवराइस इत्यादेशौ भवत । अण्णाइसु । अवराइसु ॥

## बहिल्लगा शीघ्रादीनाम् ॥ ५६ ॥

अपभ्रंशे शीघ्रादीना बहिल्लादय आदेशा प्रायो भवन्ति । शीघ्रस्य बहिल्ल —

एक्कु कइअहवि न आवही अन्नु बहिल्लउ जाहि ।
मइ मित्तडा प्रमाणिअउ पइं जेहउ खलु नाहि ॥
एक कदाचिदपि नायासि अन्यत् शीघ्र यासि ।
मया मित्र ! प्रमाणितस्त्वया यादृश खलो नहि ॥

अस्मिन् गणे कस्य किं भवति ? तथाहि, झकटकस्य घगघल —

जिम सुपुरिस तिम घग्घलइ जिम नइ तिम वलणाइं ।
जिम डोंगर तिम कोट्टरइं हिआ विसूरहि काइ ॥
यथा सुपुरुषास्तथा झकटका यथा नद्यस्तथा वलनानि ।
यथा पर्वतास्तथा कोटराणि हृदय ! खिद्यसे कथम् ॥

(१) पुष्यतां—मु० पु० । (२) गञ्जितो—मु० पु० ।

रम्यस्य रवण्ण —

सरिहिं न सरेहिं न सखरेहिं नवि उज्जाणवणेहिं ।
देस रवण्णा होन्ति वढ निवसन्तेहि सुअणेहिं ॥
सरिद्भिर्न सरोभिर्न सरोवरैर्नाप्युद्यानवनै ।
देशा रम्या भवन्ति मूढ ! निवसद्भि सुजनै ॥

यद्यद् दृष्ट तत्तदित्यस्य जाइट्ठिआ—

अइ रचसि जाइट्ठिअए हिअडा मुद्धसहाव ।
लोहें पुट्टणएण जिम घणा सहेसहि ताव ॥
अथ रज्यसि यद्यद् दृष्ट तत्तत् हृदय ! मुग्धस्वभाव ! ।
लोहेन स्फुटता यथा घन सहिष्यते ताप ॥

पृथक्पृथगित्यस्य अंजुअ —

एक कुडुली पश्वहिं रुद्धी तह पश्वहवि जुअजुअ बुद्धिइ ।
बहिणुए त घरु कहि किंव नन्दउ जेत्थ कुडुबउ अप्पणच्छदइ ॥
एक कुटी पश्चभी रुद्धा तेषा पश्चानामपि पृथक्पृथग्बुद्धि ।
भगिनि ! तद् गृहं कथय कथ नन्दतु यत्र कुटुम्बकमात्मच्छन्दकम् ॥

भयस्य द्रवक्क (१)—

दिवेहिं विढत्तउ खाहि वढ सचि म एक्कुवि द्रम्मु ।
कोवि द्रवक्कउ सो पडइ जेण समप्पइ जम्मु ॥
देवैरर्जित खादय मूढ ! संचिनु मा एकमपि द्रम्मम् ।
किमपि भय तत्पतति येन समाप्यते जन्म ॥

मा भैषीरित्यस्य स्त्रीवत् मब्भिसडी—

सत्थावत्थहं आलवणु साहुवि लोउ करेइ ।
आदन्नह मब्भिसडी जो सज्जणु सो देइ ॥
स्वस्थावस्थानामालपन सर्वोऽपि लोक करोति ।
आर्त्तांना मा भैषीर्य सज्जन स ददाति ॥

अवस्कन्दस्य दडवड —

चलेहिं चलन्तेहिं लोअणेहिं जे तइ दिट्ठा बालि ।

---

(१) द्रवक—इति ख० ।

तहिँ मअरद्धअदडवडउ पडइ अपूरइ कालि ॥
चलैश्चलद्भिर्लोचनैर्ये त्वया दृष्टा बाले ! ।
तेषु मकरध्वजावस्कन्दा पतन्त्यपूर्णे काले ॥

आत्मीयस्य अप्पण —

फोडेन्ति जे हिअडउ अप्पणउ । स्फोटयन्ति ये हृदयमात्मन ॥

गाढस्य निच्चट्ट —

विहवे कस्सु थिरत्तणउ जोव्वणि कस्सु मरट्टु ।
सो लेखडउ पठाविअउ जो लग्गइ निच्चट्टु ॥
विभवे कस्य स्थिरत्व यौवने कस्य गर्व ।
स लेख प्रस्थाप्यते यो लगति गाढम् ॥

क्रीडाया खेड्ड —

खेड्डअ कयमम्हेहिँ निच्छय किं पयम्पह ।
अणुरत्ताउ भत्ताउ अम्हे मा चअ सामिअ ॥
क्रीडा कृतास्माभिर्निश्चय किं प्रवदथ ।
अनुरक्तान् भक्तानस्मान् मा त्यज स्वामिन् ! ॥

असाधारणस्य असड्ढल —

कहिँ ससहरु कहिँ मअरहरु कहिँ बरिहिणु कहिँ मेहु ।
दूरठिआहवि सज्जणह होइ असड्ढलु नेहु ॥
कुत्र शशधर कुत्र मकरगृह कुत्र बर्हिण कुत्र मेघ ।
दूरस्थितानामपि सज्जनाना भवत्यसाधारण स्नेह ॥

नवस्य नवखी—

नवखी कवि विसगठि । नवा कापि विषग्रन्थि ॥

मूढस्य नालिअवढौ—

जो पुणु मणि जि खसिफसिहूअव चिन्तइ देइ न दम्मु न रूअव ।
रइवसभमिरु करग्गुल्लालिउ घरहिँ जि कोन्तु गणइ सो नालिउ ॥
य पुनर्मनस्येव व्याकुलीभूतश्चिन्तयति ददाति न द्रम्म न रूपकम् ।
रतिवशाभ्रमणशील कराग्रोल्लालित गृह एव कुन्त गणयति स मूढ ॥
दिवेहिँ विढत्तउ खाहि वढ । दैवैरर्जित खादय मूढ ! ॥

अस्पृश्यसंसर्गस्य विट्टाल —

जे छड्डेविणु रअणनिहिं अप्पउ तडि घल्लन्ति ।
तहं सङ्खहं विट्टालु पर फुक्किज्जन्त भमन्ति ॥
ये मुक्त्वा रत्ननिधिमात्मानं तटे क्षिपन्ति ।
तेषां शङ्खानामस्पृश्यसंसर्गः परं फूत्क्रियमाणा भ्रमन्ति ॥

अद्भुतस्य ढक्करि —

हिअडा पइं बहु बोल्लिअउ महु अग्गइ सअवार ।
फुट्टिसु पिए पवसन्ति हउं भण्डय ढक्करिसार ॥
हृदय ! त्वया बहूक्तं ममाग्रे शतवारम् ।
स्फुटिष्यामि प्रियेण प्रवसताऽहं भण्डयाद्भुतसार ! ॥

कौतुकस्य कोड्ड —

कुञ्जरु अन्नहं तरुवरहं कोड्डेण घल्लइ हत्थु ।
मणु पुणु एक्कहिं सल्लइहिं जइ पुच्छह परमत्थु ॥
कुञ्जरोऽन्येषु तरुवरेषु कौतुकेन क्षिपति हस्तम् ।
मनः पुनरेकस्यां सल्लक्यां यदि पृच्छथ परमार्थम् ॥

हे सखीत्यस्य हेल्लि —

हेल्लि म झङ्खहि आलु देत्थु सु विहिवि न सइ ।
विडअतु गहिमि वि णिरहु विसाउ सव्वइ कड्ढइ ॥
हे सखि ! मा जल्पानर्थकं दृष्ट्वा स विधिरपि नास्ति ।
पीडयतु गृह्णाम्यपि नित्यं विषादं सर्वमाकर्षामि ॥

यदेश्छुड्डु —

वेस जि छुड्डु अग्घइ ववसाउ ॥
वेश्यैव यदि अर्घति व्यवसायम् ॥

सम्बन्धिन केरतणो—

गअउ सु केसरि पिअहु जलु निच्चिन्तइं हरिणाइं ।
जसु केरए हुंकारडए मुहहु पडन्ति तिणाइं ॥
गतः स केसरी पिबत जलं निश्चिन्ता हरिणाः ।
यस्य सम्बन्धिना हुङ्कारेण मुखेभ्यः पतन्ति तृणानि ॥

जइ भग्गा अम्हहं तणा । यदि भग्ना अस्माकं सम्बन्धिन ॥

दृष्टेर्द्रेहि —

एकमेक्कउ जइवि पेक्खइ हरि सुट्ठु सव्वाअरेण, तो वि द्रेहि जहिं कहिं वि राही को सक्कइ संवरेवि दड्ढनअणा नेहिं पलुट्टा ।

एकैक यद्यपि पश्यति हरि सुष्ठु सर्वादरेण, ततोऽपि दृष्टिर्यत्र कुत्रापि राधा, क शक्नोति संवरितु दग्धनयने स्नेहन पर्यस्ते । इत्यादि ॥

## हुहुरुघिग्घिगा शब्दचेष्टानुकृत्यो ॥ ५७ ॥

अपभ्रंशे हुहुर्वादय शब्दानुकरणे घिग्दयादयश्चेष्टानुकरणे यथासख्य प्रयोक्तव्या ।

मई जाणिउ बुड्डीसु हउ पेमद्रहिं हुहुरुत्ति ।
णवरि अचिन्तिअ सपडिय विप्पिय नवि झडत्ति ॥
मया ज्ञात मज्जिष्याम्यहं प्रेमहृदे हुहुरु इति ।
केवलमचिन्तिता सम्पत्तिर्विप्रिया नापि झटिति ॥

आदिग्रहणात्—

खज्जइ न कसरक्केहिं पिज्जइ न घुटेहिं ।
एमइ होइ सुहच्छडी पिए दिट्ठे नअणेहिं ॥
खाद्यते न कसरत्कै पीयते न घुण्टै ।
एवमेव भवति सुखास्या प्रिये दृष्टे नयनाभ्याम् ॥

इति शब्दानुकरणम् ।

अज्जुवि नाहु महुज्जि घरि सिद्धत्था वदेइ ।
ताउजि विरहु गवक्खेहिं मक्कडुघिग्घिउ देइ ॥
अद्यापि नाथो ममैव गृहे सिद्धार्थान् वन्दते ।
तावदेव विरहो गवाक्षेभ्यो मर्कटविभीषिका ददाति ॥

आदिग्रहणात्—

सिरि जर खडी लोअडी गलि मणियडा न वीस ।
तोवि गोट्ठडा कराविआ मुद्धए उट्ठ बईस ॥
शिरसि जरा खण्डिता लोमपुटी गले, मणयो न विंशति ।

ततोऽपि गोष्ठा कारिता मुग्धया उत्तिष्ठोपविश ॥

इति चेष्टानुकरणमित्यादि ॥

## अनर्थका घइमादयः ॥ ५८ ॥

अपभ्रंशे घइ इत्यादयो निपाता अनर्थका प्रयुज्यन्ते ।

पेम्मडि पच्छायावडा पिउ कलहिअउ विआलि ।
घइ विवरीडी बुद्धडी होइ विणासहो कालि ॥
प्रेम्णि पश्चात्ताप प्रिय कलहायितो विकाले ।
विपरीता बुद्धिर्भवति विनाशस्य काले ॥

आदिग्रहणात् खाइ–इत्यादि ॥

इति श्रीत्रिविक्रमकृतप्राकृतव्याकरणवृत्तौ तृतीयाध्यायस्य तृतीय पाद ॥

---

(१)प्राकृत, शौरसेनी, मागधी, पैशाची, चूलिकापैशाची, अपभ्रंश इति षड् भाषा, आसामित्थङ्कार शेषातिदेश –शौरसेनीशेष प्राकृतवत्, मागधीशेष शौरसेनीवत्, पैशाचीशेषमपि शौरसेनीवत्, चूलिकापैशाचीशेष पैशाचीवत्, अपभ्रंशे तु प्राय शौरसेनीवत् कार्य, लिङ्गात-त्रता च, शेष प्राकृतवत्। शौर सेन्यामिह प्रकरणे यत्कार्यमुक्तं, ततोऽन्यत् प्राकृतवदेव भवति। 'दिहौ मिथस्से' इत्यारभ्य 'दस्तस्य शौरसेन्यामखावचोऽस्तो'रिति सूत्रात् प्राग् यानि सूत्राणि, तेषु यान्युदाहरणानि तान्येव शौरसे या भवन्तीति विभाग प्रतिसूत्रमभ्यूह्य दर्शनीय ॥

## दिहौ सुपि ॥ १ ॥

अपभ्रंश इत्यनुवर्तते। अपभ्रंशे सुपि पर नाम्नोऽन्त्यस्य स्वरस्य दिहौ दीर्घ ह्रस्वौ प्रायो भवत । रामु, रामू, राम । सौ—

ढाल्ला सावला धण चपअवण्णी ।
णाइ सुवण्णरेह कसवट्टइ दिण्णी ॥
विट श्यामलो धन्या चम्पकवर्णी ।
इव सुवर्णरेखा कषपट्टे दत्ता ॥

---

( १ ) 'प्राकृत'—इत्यारभ्य 'दर्शनीयः'—इत्यन्तं नास्ति ख० पुस्तके ।

आमन्त्र्ये—

ढोल्ला मइं तुहुं वारिआ मा करु दीहा माणु ।
णिद्दए गमिही रत्तडी दडवड होइ विहाणु ॥
हे विट ! मया त्वं वारितो मा कुरु दीर्घं मानम् ।
निद्रया गमिष्यति रात्रिः शीघ्रं भवति प्रभातम् ॥

स्त्रियाम्—

बिट्टीए मइं भणिय तुहुं मा करु वङ्की दिट्ठि ।
पुत्ति सकण्णी भल्लि जिम मारइ हिअइ पइट्ठि ।
हे शिशो ! मया भणिता त्वं मा कुरु वक्रां दृष्टिम् ।
पुत्रि ! सकर्णा भल्लिर्यथा मारयति हृदये प्रविष्टा ॥

जसि—

एइ ति घोडा एह थली एइ ति निसिआ खग्ग ।
एत्थु, मुणिसिम जाणीअइ जेणवि वालइ वग्ग ॥
एते ते घोटका एषा स्थली एते ते निशिताः खड्गाः ।
अत्र मनुष्यत्वं ज्ञायते येनापि वालयति वल्गाः ॥

एवं विभक्त्यन्तरेष्वप्युदाहार्यम् ॥

## स्यम्यत उत् ॥ २ ॥

अपभ्रंशे स्यमोः परयोरुकारो भवति । रामु । घडु । पडु ।

दहमुहु भुवणभअकरु तोसिअसकरु णिग्गउ रहवरि चडिअउ ।
चउमुहु छम्मुहु झाइवि एक्कहि लाइविणावइ दइवें वडिअउ ॥
दशमुखो भुवनभयङ्करस्तोषितशङ्करो निर्गतो रथोपरि आरूढः ।
चतुर्मुखं षण्मुखं ध्यात्वापि एकत्र लगित्वेव दैवेन घटितः ॥

## ओत् सौ पुंसि तु ॥ ३ ॥

अपभ्रंशे पुंसि वर्तमानस्य नाम्नोऽकारस्य सौ परे ओत्वं वा भवति । रामो । घडो । पडो ।

अगलिअनेहनिवट्टाहं जोअणलक्खुवि जाउ ।
वरिससएणवि जो मिलइ सहि सो सोक्खहं ठाउ ॥

अगलितस्नेहनिवृत्ताना योजनलक्षमपि यातु ।
वर्षशतेनापि यो मिलति सखि ! स सौख्याना स्थानम् ॥

पुसीति किम् ?

अगहि अग्गु न मिलिउ हलि अहरे अहरु न पत्तु ।
पिअ जोअतिहे मुहकमलु एमहि सुरउ समत्तु ॥
अङ्गैरङ्ग न मिलित सखि ! अधरेणाऽधरो न प्राप्त ।
प्रियस्य पश्यन्त्या मुखकमलमेवमेव सुरत समाप्तम् ॥

## ए भिसि ॥ ४ ॥

अपभ्रंशे अकारस्य भिसि परे एत्व तु भवति । रामेहिं । घडेहिं ।

गुणहिं न संपइकित्ति पर फल लिहिआ भुजंति ।
केसरि न लहइ वोड्डिअवि गअ लक्खेहिं घेप्पति ॥
गुणैर्न सम्पत्कीर्ति पर फलानि लिखितानि भुञ्जते ।
केसरी न लभते कपर्दिकामपि गजा लक्षैर्गृह्यन्ते ॥

## टि ॥ ५ ॥

अपभ्रंशे अत टावचने परे एकारो भवति । पृथग्योगान्न विकल्प । रामेण । घडेण ।

जे महु दिण्णा दिअहडा दइए पवसन्तेण ।
ताण गणतिए अंगुलिउ जज्जरिआउ नहेण ॥
ये मम दत्ता दिवसा दयितेन प्रवसता ।
तान् गणयन्त्या अङ्गुल्यो जर्जरिता नखेन ॥

## ङिनेच्च ॥ ६ ॥

अपभ्रंशे अकारस्य ङिना सह इकार एकारश्च भवति । रामि, रामे । घडि, घडे ।

साअरु उप्परि तणु धरइ तलि घल्लइ रयणाइं ।
सामि सुभिच्चुवि परिहरइ संमाणेइ खलाइं ॥
सागर उपरि तृणानि धरति तले क्षिपति रत्नानि ।
स्वामी सद्भृत्यमपि परिहरति सम्मानयति खलान् ॥

## ङसेर्हेहु ॥ ७ ॥

अत इति पञ्चम्यन्तविपरिणाम । अपभ्रंशे अकारात् परस्य ङसे हे इत्यादेशौ भवत ।

वच्छहे गेण्हइ फलाइ जणु कडु पल्लव वज्जेइ ।
तोवि महद्दुमु सुअणु जिम ते उच्छगि करेइ ॥
वृक्षाद् गृह्णाति फलानि जन कटून् पल्लवान् वर्जयति ।
ततोऽपि महाद्रुम सुजनो यथा तानुत्सङ्गे करोति ॥

वच्छहु गेण्हइ । वृक्षाद् गृह्णाति ॥

## भ्यसो हुं ॥ ८ ॥

अपभ्रंशे अकारान् परस्य भ्यस पञ्चमीबहुवचनस्य हु इत्यादेशो भवति

दुरुड्डाणें पडिउ खलु अप्पणु जणु मारेइ ।
जिह गिरिसिंगहु पडिअ सिल अनुवि चूरु करेइ ॥
दूरोड्डानेन पतित खल आत्मान जन मारयति ।
यथा गिरिशृङ्गेभ्य पतिता शिलान्यदपि चूर्ण करोति ॥

## सुस्सुहो ङसः ॥ ९ ॥

अपभ्रंशे अत परस्य ङस सु स्सु हो इति त्रय आदेशा भवन्ति । रामसु रामासु । रामस्सु । रामहो, रामाहो ।

जो गुण गोवइ अप्पणा पअडा करइ परस्सु ।
तसु हउ कलिजुगि दुल्लहहो बलि किज्जउ सुअणस्सु ॥
यो गुणान् गोपायत्यात्मन प्रकटान् करोति परस्य ।
तस्याह कलियुगे दुर्लभस्य बलि करोमि सुजनस्य ॥

## आमो ह ॥ १० ॥

अपभ्रंशे अकारात् परस्य आम ह इत्यादेशो भवति ।

तणह तइज्जी भगि नवि तें अवडयडि वसंति ।
अह जणु लग्गिवि उत्तरइ अह सह सइ मज्जति ॥
तृणाना तृतीया भङ्गिर्नापि तेनावटतटे वसन्ति ।

अथ जनो लगित्वा उत्तरति अथ सह स्वय मज्जन्ति ॥

## टा णानुस्वारौ ॥ ११ ॥

अपभ्रंशे अत परस्य टावचनस्य णत्वमनुस्वारश्च भवत । दइएं पवस-न्तेण । दयितेन प्रवसता ॥

## ए चेदुतः ॥ १२ ॥

अपभ्रशे इकारादुकाराच्च परस्य टावचनस्य एं इति, चकारात् णानुस्वारौ च भवन्ति । ए—

अग्गिए उण्हउ होइ जग वाए सीअलु तेव ।
जो पुणु अग्गिए सीअला तसु उण्हत्तणु केव ॥
अग्निनोष्ण भवति जगद् वातेन शीतल तथा ।
य पुनरग्निना शीतलस्तस्योष्णत्व कथम् ॥

णानुस्वारौ—

विप्पिअआरउ जइवि पिउ तोवि त आणहिं अज्जु ।
अग्गिण दड्ढा जइवि घरु तो ते अग्गिं कज्जु ॥
विप्रियकारको यद्यपि प्रियस्तथापि तमानयाद्य ।
अग्निना दग्ध यद्यपि गृह ततस्तेनाऽग्निना कार्यम् ॥

एवमुकारा तादप्युदाहार्यम् ॥

## हिहे ङिङस्योः ॥ १३ ॥

अपभ्रशे इदुद्भ्या परयो ङि ङसि इत्येतयो हिं हे इत्यादेशौ क्रमेण भवत । ङेर्हिं—

अह विरलपहाउ जि कलिहिं धम्मु । अथ विरलप्रभाव एव कलौ धर्म ॥

ङसेर्हें—

गिरिहे सिलायलु तरुहे फलु घेप्पइ नीसावन्नु ।
घरु मेल्लेप्पिणु माणुसहं तोवि न रुच्चइ रन्नु ॥
गिरे शिलातल तरो फल गृह्णाति निस्सामान्यम् ।
गृह मुक्त्वा मानुषाणा तथापि न रोचतेऽरण्यम् ॥

